ॐ तत्सत् ।



# श्रीशंकराचार्यविरचितग्रंथसंग्रहः

तृतीयो भागः ।

# ब्रह्मसूत्रभाष्यम्




रा. रा. हरि रघुनाथ भागवत

इत्यनेन गार्ग्यगोत्रजचित्तपावनब्राह्मणेन

पुण्यपत्तनस्थेन संशोधितम् ।



प्रथमं स्करण ।

पुण्यपत्तने

अष्टेकर कंपनी

इत्येतैः प्राकाश्यं नीतम् ।

शालिवाहनशकाब्दाः १८४०

# भूमिका

---

श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशंकरभगवत्पादाचार्यविरचितग्रंथानां अल्पमूल्या आवृत्तिः संप्रति मुद्रायितुं प्रवृत्ता वयमित्येतद्विदितमेव । तस्या अयं तृतीयो भागः । भगवता बादरायणेन प्रणीतानि वेदान्तसूत्राणि श्रीशंकराचार्यैः विरचितेन शारीरकभाष्येण सह अस्मिन्नस्माभिमुर्द्रयितानि । अस्मिन्भाष्ये शांकरी विद्या प्रकृष्टत्वेन विभातीति सकलावनितलतत्त्वज्ञानामैकमत्यम् ।

पश्चिमदिग्देशस्थगौरकायजनसमूहान्योन्यस्पर्धाजनितेन चतुर्वर्षात्मकेण भीषणसंग्रामेण मुद्रणकार्ये आनीतानामनेकविधानामापत्तीनां पारं महता प्रयासेनापि गतवन्तो वयमित्येष केवलो भगवत्कृपाया एव प्रभाव इति मन्यामहे वयम् । श्रीमदाचार्याणां प्रकरणग्रंथादीनामपि भागद्वयं संमुद्र्य नातिचिरात्कालात्तत्तत्त्वविद्यार्थिप्सून्मोदयिष्याम इत्याशास्महे ।

**प्रकाशकाः ।**

# ब्रह्मसूत्रभाष्यविषयानुक्रमणिका

ोऽध्यायः मन्वयाख्यः ।

१८ २० परमात्मैवांतर्यामी 'योंऽतरो यमयति' [बृ. ३.७.३].

२१—२३ 'यत्तदद्रेश्यं' [मुं. १.१.६] इत्यदृश्यत्वादिगुणको भूत-योनिः परमेश्वर एव ।

२४ ३२ 'वैश्वानरः आत्मा' [छां. ५.११.६] परमेश्वर ए ।

**तृतीयः पादः ज्ञेयब्रह्मप्रतिपादकास्पष्टश्रुतिसमन्व ाख्यः ।**

१ ७ 'यस्मिन्द्यौः पृथिवी चांतरिक्षं ओतं' [मुं. २.२.५] इत्येत-द्द्युप्रभृतीनां ओतत्ववचनादवगतं द्युभ्वाद्यायतनं पर-मेव ब्रह्म ।

८ ९ भूमरूपता [छां. ७.२३] परमात्मनः ।

१०—१२ अक्षरं [बृ. ३.८.८] परमेव ब्रह्म ।

१३ 'त्रिमात्रेणोंकारालंबनेन परमात्मानं' [प्रश्न ५.५] अभिध्या-यतः फलं ब्रह्मलोकप्राप्तिः ।

१४ २१ 'दहरः' [छां. ८.१.१] परमेश्वरः ।

२२ २३ 'न तत्र सूर्यो भाति' [मुं. २.२.१०] इत्यत्र यं भान्तं सर्व-मनुभाति तद्ब्रह्मैव ।

२४—२५ 'अंगुष्ठमात्रः पुरुषः' [कठ. ४.१२] परमात्मैव ।

२६—३३ देवादीनामपि ब्रह्मविद्यायामाधिकारः । वेदस्य नित्यत्वम् ।

३४—३८ नाधिकारः शूद्राणाम् ।

३९ 'यदिदं किंच जगत्सर्वं प्राण एजति' [कठ. ६.२] इत्यत्र प्राणस्य परमात्मानिश्चयः ।

४० 'एष संप्रसादो परं ज्यो रूप पद्य' [छां. ८.१२.३] इत्यत्र परमेव ब्रह्म ज्योतिःशब्दम् ।

४१ 'आकाशो वै नाम' [छां. ८.१४] इत्यत्र परमेव ब्रह्म आकाशशब्दम् ।

४२ ४३ ' तम आत्मेति योऽयं विज्ञानमयः प्राणेषु' [बृ. ४.३. ] इतीदं परमेश्वरोपदे परमेव वाक्यम् ।

**ः पादः । अव्यक्तादिसंदिग्धपदमात्रसमन्व ाख्ः ।**

१ 'मह ः परमव्यक्तं' [ . ३.११] इत्यत्र अव्यक्तशब्दे

सांख्यपरिकल्पितस्य प्रधानस्यावकाशः ।

८ १० 'अजामेकां [श्वे. ४.५] इत्यस्मिन्मंत्रे न काचित्प्रकृतिः प्रधानं नाम अजा त्रेणाम्नाय । परमेश्वरादुत्पन्ना प्रकृतिभूतेय जा प्रतिपत्तव्या ।

११—१३ 'पंच पंचजनाः' [बृ. ४.४.१७] इत्यस्मिन्मंत्रे न सांख्यानां पंचविंशाति त्त्वानामुपसंग्रहः, किं तर्हि, प्राणादय एव पंच निर्दिष्टाः ।

१४—१५ वेदान्तवाक्यानां ब्रह्मविषयं गतिसामान्यम् । 'अ द्वा इदमग्र आसीत्' [तै. २. ] इत्यत्र, च्छब्दः नामरूपव्याकृतवस्तुविषयः प्रायेण प्रसिद्ध इत्यतः,—सदेव ब्रह्म असदिवासीदित्युपचर्यते ।

१६—१८ 'यो वै बालाक एतेषां पुरुषाणां कर्ता' [कौ. ४.१९] इत्यत्र परमेश्वर एवायं सर्वजगतः कर्ता सर्ववेदान्तेषु अवधारितः ।

१९—२२ 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मंतव्यो निदिध्यासितव्यः' [बृ. २.४.५] इत्यत्र परमात्मन एवायं दर्शनाद्युपदेशः।

२३—२७ आत्मनः कर्तृत्वं प्रकृतित्वं च ।

२८ प्रधानकारणवादप्रतिषेधेन अण्वादिकारणवादा अपि प्रतिषिद्धाः ।

## द्वितीयोऽध्यायः अविरोधाख्यः ।

प्रथमः पादः ंख्यये णादादिस्मृतिभिः सांख्यादिप्रयुक्ततर्कैश्च वेदान्त मन्वयविरोधपरिहाराख ः ।

१— २ कपिलस्य तंत्रं वेदविरुद्धम् । न केवलं स्वतंत्रप्रकृतिकल्पनयै , किं तर्हि, आत्मभेदकल्पनयापि ।

३ योगस्मृतिरपि प्रत्याख्याता ।

४—११ आगमवशेन आगमानुसारितर्कवशेन च चेतनं ब्र ज ः कारणं प्रकृतिश्च ।

१२ एतेन प्रधान रणवादनिराकरणेन अण्वादिकारणवादा अपि निराकृताः ।

१३ णः अनन्यत्वेऽपि उपपद्यते भोक्तृभोग्यलक्षणो विभागः।

१४—२० कार्यस्य कारणादनन्यत्वम् । कृत्स्नस्य जगतः ब्रह्मकार्यत्वं तदनन्यत्वं च ।

२१—२३ यद्ब्रह्मणः स्रष्टृत्वं तच्छारीरस्यैव । अ : स्वतंत्रः कर्ता सन् हितमेवात्मनः कुर्यान्नाहि म् । यदा तु अभेदः प्रतिबोधितो भवति, अपगतं तदा जीवस्य संसारित्वं ब्रह्मणश्च स्रष्टृत्वं, न तु परमार्थतोऽस्ति सारः ।

२४—२५ परिपूर्णशक्तिकं ब्रह्म न बाह्यं साधनमपेक्षते ।

२६—२९ ब्रह्म सर्वव्यवहारास्पदं प्रतिपद्यते, पारमार्थिकेन च रूपेण सर्वव्यवहारातीतमवतिष्ठते ।

३०—३१ एकस्यापि ब्रह्मणः उपपद्यते विचित्रो विकारप्रपंचः ।

३२—३३ इयं जगद्बिंबविरचना परमेश्वरस्य लीलैव केवला ।

३४—३६ वैषम्यनैर्घृण्ये नेश्वरस्य प्रसज्येते । देवमनुष्यादिवैषम्ये तु तत्तज्जीवग न्येवासाधारणानि कर्माणि कारणानि भवन्ति । प्राक्सृष्टेः वैचित्र्यनिमित्तस्य कर्मणः अभावात् तुल्यैवाद्या सृ : प्राप्नोतीति चेत्—नैष दोषः, अनादित्वात्संसारस्य ।

३७ उपसं रः ।

**द्वितीयः पादः । सांख्यादि तानां दुष्टत्वप्रदर्शनम् ।**

१—१० ंख्यानां प्रधानकारणवादस्य निराकरणम् ।

११ चेतनस्य ब्रह्मणो जगत्कारणत्वे कार्येऽपि जगति चैतन समवेयात्—इत्येतस्य वैशेषिकाभ्युपगमस्य निराकरण ।

१२—१७ वैशेषिकाणां परमाणुकारणवादस्य निराकरणम् ।

१८—२७ सर्वास्तित्ववादिनां बौद्धानां निराकरणम् ।

२८—३२ विज्ञानवादिनां बौद्धानां निराकरण ।

३ —३६ आर्हतमपि मतं अ तम् ।

३७ ४१ पाशुपतानां ईश्वरकारणवादोऽप्यसंग : ।
४२—४५ पांचरात्रम मसंगतम् ।

**तृतीयः पादः । पंचमहाभूतजीवश्रुतीनां विरोधपरिहाराख्यः ।**

१— ब्रह्मकार्यं वियत् ।
८ आकाशाद्वायुः ।
९ ब्र णः दात्मकस्य न कुतश्चिदन्यतः उत्पत्तिः ।
१० वायोरग्निः ।
११ अग्नेरापः ।
१२ अद्भ्यः पृथिवी ।
१३ परमेश्वर एव तेन तेनात्मना अवतिष्ठमानोऽभिध्यायंस्तं तं विकारं सृजति ।
१४ विपर्ययेण अप्ययक्रमः ।
१५ एतस्माज्जायते प्राणः मनः वैंद्रियाणि च ।
१६ न जीवस्य देहाश्रयौ उत्पत्तिप्रलयौ स्तः ।
१ नात्मा जीवः उत्पद्यते बुद्ध्याद्युपाधिनिमित्तं त्वस्य प्रविभाग-प्रतिभानम् ।
१८ आत्मा ( ंख्यानामिव) नित्यचैतन्यस्वरूप एव, न कण-भुजानामिव आगंतुकचैतन्यः ।
१९—३२ यस्मात्परमेव ब्रह्म जीवः, तस्माद्यावत्परं ब्र तावानेव जीवः । तस्माद्विभुर्जीवः, न अणुः ।
३३—३९ कर्ता चायं जीवः ।
४० आत्मनः कर्तृत्वं उपाधिनिमित्तं, न स्वाभाविकम् ।
४१—४२ परस्मादात्मनः जीवस्य कर्तृत्वभोक्तृत्वलक्षणस्य सारस्य सिद्धिः ।
४३ ५३ जीवस्य ईश्वरांशत्वम् । य । जीवः संसारदुःखमनुभवति नैवं पर ईश्वरोऽनुभवति । जीवस्यापि भ्रमनिमित्त ए दुःखाभिमानो न पारमार्थिकः ।

**चतुर्थः पादः लिंगशरीरश्रुतीनां विरोधपरिहाराख्यः ।**

१ ४ प्राणा अपि परस्य ब्रह्मणो विकाराः ।

५ ६ पंच बुद्धींद्रियाणि, पंच कर्मेंद्रियाणि, एकं मनः इति प्राणाः। प्राणाः सूक्ष्माः परिच्छिन्नाश्च ।

८ मुख्यश्च प्राणः इतरप्राणवद्ब्रह्मविकारः ।

९ १२ मुख्यः प्राणः प्राणोऽपानो व्यान उदानः मान इति पंचविधः ।

१३ अणुश्चायं मुख्यः प्राणः ।

१४ १६ वागादीनां प्राणानां देवताधिष्ठितत्वमेव ।

१ १९ तत्त्वांतरभूता एव मुख्यात्प्राणादितरे ।

२० २२ नामरूपव्याकरणं परमेश्वरकर्तृकम् । त्रिवृत्करणपूर्वकमेवेदानीं नामरूपव्याकरणं विवक्ष्यते । त्यपि त्रिवृत्करणे वैशेष्यादेव भूतभौतिकविषय उपपद्यते ।

## तृतीयोऽध्यायः धनाख्यः ।

**प्रथमः पादः पंचाग्निविद्यामुदाहृत्य गत्यागतिचिं वैराग्यनिरूपणाख्यः**

१— ७ जीवो मुख्यप्राणसचिवः पूर्वदेहं विहाय देहबीजैर्भूतसूक्ष्मैः असंपरिष्वक्तो देहांतरं गच्छति ।

८ ११ सुकृतदुष्कृते एव देहांतरप्रतिपत्तौ कारणम् ।

१२ २१ इष्टादिकारिणश्चंद्रमसं गच्छन्ति । इतरे वदुष्कृतानुरूपाः यामीर्यातना अनुभूय पुनरेवेमं लोकं प्रत्यवरोहन्ति । ये न विद्यासाधनेन देवयाने पथ्यधिकृताः, नापि कर्मणा पितृयाणे तेषां क्षुद्रजंतुलक्षणोऽसकृद्द्वावर्ती तृतीयः पंथा भवति । आंडजं जीवजं उद्भिज स्वेदजं इति चतुर्विधः भूतग्रामः ।

२२ आकाशादिसाम्यं प्रतिपद्य अवरोहप्र रः ।

२३ अल्पेनैव कालेन अवरोहः ।

२४ २ अन्यैर्जीवैराधिष्ठितेषु व्री दिषु सर्ग त्रमनुशयिनः प्रतिप-

द्यन्ते । ततः अन्नाद्रेतः रेतसः शरीरं जायते ।

**द्वितीयः पादः तत्त्वंपदार्थपरिशोधनाख्यः ।**

१ ६ ागरितप्रभववासनानिर्मितत्वात् स्वप्नस्य मायामात्रत्वम् ।

७— ८ सुषुप्तावस्थापरीक्षणम् । आत्मैव सुप्तिस्थानम् ।

९ स एव जीवः प्रतिबुध्यते ।

१० मोहस्वापयोः भेदः । मोहः द्वारं मरणस्य । यदास्य सावशेषं कर्म भवति दा वाङ्मनसे प्रत्यागच्छतः, यदा तु निरवशेषं दा प्राणोष्माणावपगच्छतः ।

११—२१ अपास्तसमस्तविशेषमेव ब्र ।

२२—३० निरस्तसमस्तप्रपंचं ब्रह्म ।

३१—३७ कानिचित् वाक्यानि आपातेनैव प्रतिभासमानानि ब्रह्मणोऽपि परमन्यत्तत्त्वं प्रतिपादयन्तीव, तेषां परिहारः ।

३८—४१ इष्टानिष्टव्यामिश्रलक्षणं त्रिविधं जंतूनां कर्मफलं ईश्वराद्भवितुमर्हति । जैमिनिः धर्मं फलस्य दातारं मन्यते । बादरायणस्तु ईश्वरमेव फलहेतुं मन्यते ।

**तृतीयः पादः परापरब्रह्मविद्यागुणोप हाराख्यः ।**

१— ४ विद्यैकत्वम् । उपासनानामपि सर्ववेदान्तप्रत्ययत्वसिद्धिः ।

५ सर्वविज्ञानानां समाने विज्ञाने उप हारो भवति ।

६ ८ छांदोग्य [१.२]-बृ दारण्यक [१.३]-प्राणसंवादयोः विद्यैकत्वम् ।

९ ॐ उद्गीथयोः बंधः ।

१० बृहदारण्यक [६.१.१४] छांदोग्य [५.१.१३]—कौषीतकि [२.१४]—प्राण ादिषु एकप्रधान बद्धा धर्मा उपसंहर्तव्याः ।

११ १३ आनंदादयो ब्रह्मधर्माः र्वत्र प्रतिपत्तव्याः । त्यकामत्वादीनां धर्माणां न सर्वत्र प्राप्तिः ।

१४—१५ 'इंद्रियेभ्यः परा र्थाः' [कठ. .१०—११] इत्यत्र पुरुष एवैभ्यः सर्वेभ्यः परः प्रतिपादितः ।

१६—१ 'आत्मा वा इदमेक एवाग्र आसीत्' [ऐ. १.१] इत्यत्र पर एवात्मा इह आत्मशब्देन गृह्यते ।

१८ 'स्माद्वा एतदशिष्यन्तः' [ ।. ५.२], 'द्विद्वां : श्रोत्रियाः' [बृ. ६.१] इत्युभयत्र वा ।विज्ञानमेव विधीयते नाचमनम् ।

१९. वाजसनेयिशाखायां अग्निरहस्य[श. ब्रा. १०.६.३]—बृहदारण्यक[५.६]योः विद्यैकत्वं गुणोप हारश्च ।

२० २२ 'अहरित्यधिदैवतं' 'अहमित्यध्यात्मं' [बृ. ५.६] अनयोरुपनिषदोः व्यवस्था ।

२ वीर्यप्रभृतीनां ब्रह्मणो विभूतीनां शांडिल्यविद्यादिष्वनुपसंहारः।

२४ शाखांतराधीतानां पुरुषविद्याधर्माणां आशीर्मंत्रादीनामप्राप्तिः तैत्तिरीयके ।

२५ मंत्राणां कर्मणां वा संनिधिपाठमात्रेण न विद्याशेषत्वम् ।

२६—२८ तांडिशाट्यायनिश्रुत्योः संगतिः ।

२९—३० देवयानः पंथाः पर्यंकविद्यादिषु गुणेष्वूपासनेषु उपलभ्यते।

३१ सर्वासामेव गुणानां विद्यानां अविशेषेणैषा देवयानाख्या गतिर्भवितुमर्हति । नहि केवलाभ्यां श्रद्धातपोभ्यां [छां. ५.१०.१] अंतरेण विद्याबलं एषा गतिर्लभ्यते । वाजनेयिनां पंचाग्निविद्याधिकारे [बृ.६.२.१५] सत्यं=ब्रह्म उपासते इति व्याख्येयम् ।

३२ ब्रह्मविदः स्वातंत्र्येणैव देहान्युगपत्क्रमेण वा अधितिष्ठन्ति । ऐकांतिकी विदुषः कैवल्यसिद्धिः ।

३३ 'एतद्वै तदक्षरं गार्गि' [बृ. ३.८.८] 'अथ परा यया तदक्षरं' [मुं. १.१.६] इत्युभयत्र अभिन्नमेव ब्र ।

३४ 'द्वा सुपर्णा' [मुं. ३.१.१] 'ऋतं पिबन्तौ' [कठ. ३.१] उभावप्येतौ मंत्रौ जीवद्वितीयमीश्वरं प्रतिपादयतः नार्थांतरम् ।

३५—३६ तथा 'यत्साक्षादपरोक्षाद्ब्र' इति श्रुतिद्वये [बृ. ३.४.;

३.५] विद्यैकत्वमेव । पूर्वस्मिन्ब्राह्मणे कार्यकरणव्यतिरिक्तस्य आत्मनः सद्भावः कथितः, उत्तरस्मिंस्तु तस्यैव अशनायादि रध र्तीतत्वम् ; इत्येकार्थतोपपत्तिः ।

३७ ध्यानाय द्विरूपा कृता मतिः एकरूपैव ।

३८ बृ. ५.४ तथा ५.५ इत्यत्र विद्यैकत्वं, (न बृ. ५.४.५ तथा छां. १.६.७ इत्यत्र ) ।

९ छां. ८.१.१—५ तथा बृ. ४.४.२२ इत्यत्र सामान्यं विशेषश्च ।

४०—४१ वैश्वानरविद्याविचारः ।

४२ कर्मांगव्यपाश्रयाणि विज्ञानानि ।

४३ अधिदैवतं वायुः [छां. ४.३], अध्यात्मं च प्राणः [बृ.१.५.२१] इत्येते वायुप्राणौ पृथगेवोपगंतव्यौ ।

४४—५२ अग्निरहस्ये [श. ब्रा. १०.५] मनश्चिदादयः केवलविद्यात्मकाः ।

५३—५४ अनवद्यं देहव्यतिरिक्तस्यात्मनोऽस्तित्वम् ।

५५—५६ उद्गीथादिकर्मांगावबद्धाः प्रत्ययाः सर्वशाखास्वनुवर्तेरन् ।

५७ समस्तोपासनपक्ष एव श्रेयान् ।

५८ वेद्याभेदेऽपि विद्या भिन्ना ।

५९ विद्याभेदे विद्यानामन्यतममादाय तत्परः स्यात् ।

६० काम्याः विद्याः यथाकामं समुच्चीयेरन्न वा ।

६१—६६ यथाकामं उपासनानां समुच्चयो विकल्पो वा ।

**चतुर्थः पादः निर्गुणविद्याया अंतरंगबहिरंगसाधनविचारः ।**

१ ७ औपनिषदमात्मज्ञानं स्वतंत्रमेव पुरुषार्थसाधनं भवति ।

८ २० अनुष्ठेयमाश्रमांतरं इति बादरायण आचार्यो मन्यते । सिद्धा ऊर्ध्वरेतसामाश्रमाः, सिद्धं च ऊर्ध्वरेतःसु विधानाद्विद्यायाः स्वातंत्र्यम् ।

२ —२२ उपा नविधानार्था उद्गीथादिश्रुतयः ।

२३ २४ कर्मश्रुतिगतानामाख्यानानां संनिहितविधिस्तुत्यर्थता ।

२५ विद्यया स्वार्थसिद्धौ कर्माणि नापेक्षितव्यानि ।

२६—२७ आश्रमकर्माणि विद्यया फलसिद्धौ नापेक्ष्यन्ते उत्पत्तौ चापेक्ष्यन्ते ।

२८ ३१ प्राणात्ययप्रसंगे प्राण धारणाय अभक्ष्यमपि भक्षयितव्यं, स्वस्थावस्थायां तु त कर्तव्यं विद्यावतापि ।

३२—३५ आश्रमकर्माणि विद्यामकामयमानस्य, न फलांतरमकामयमानस्य ।

३६—३९ विधुरादीनामपि विद्यायामधिकारो न विरुध्यते ।

४० प्रतिपन्नोर्ध्वरेतोभावस्य न कथंचिदप्यप्रतिपात्तिः ।

४१ ४३ यदि ब्रह्मचारी अवकीर्येत तस्य प्रायाश्चित्तम् ।

४४ ४६ उपासनानि यजमानकर्माणि ऋत्विक्कर्माणि वा ।

४७—४९ विद्यासहकारिणो मौनस्य [ बृ. ३.५.१ ] बाल्यपांडित्यवद्विधिरेव ।

५० बाल्यस्य लक्षणम् ।

५१ कर्मजनितं विद्याफलं ऐहिकमामुष्मिकं वा ।

५२ विद्यालक्षणे फ उत्कर्षापकर्षः न मुक्तिफले ।

## चतुर्थोऽध्यायः फलनिर्णयाख्यः ।

### प्रथमःपादः जीवन्मुक्तिनिरूपणाख्यः ।

१ २ प्रत्ययावृत्तिः कर्तव्या, दर्शनपर्यवसाना ।

३ आत्मेत्येवेश्वरे मनो दधीत ।

४ न प्रतीकेष्वात्मदृष्टिः क्रियते ।

५ ब्रह्मदृष्टिरेव आदित्यादिषु [ . ३.१९.१ ]

६ 'य एवासौ तपति मुद्गीथमुपासीत' [छां. १.३.१] इत्यत्र आदित्यादिदृष्टय एव उद्गीथादिषु ।

७ १० आसीनकर्म उपासनम् ।

११ यत्रैवास्य दिशि देशे काले वा मनसः ैकर्यैणैकाग्रता

भवति तत्रैवोपासीत ।

१२ आ प्रायणादेवावर्तयेत्प्रत्ययम् ।

१३ ब्रह्माधिगमे ति उत्तरपूर्वस्य विनाशः ।

१४ पुण्यस्यापि मेणः अघवद् श्लेषो विनाशश्च ज्ञानवतो भवतः । तस्यापि ज्ञानफलप्रतिबंधित्वप्रसंगात् ।

१५ प्राग्ज्ञानोत्पत्तेः संचिते सुकृतदुष्कृते ज्ञानाधिगमात्क्षीयेते । नतु आरब्धकार्ये सामिभुक्तफले याभ्यामेतद्ब्रह्मज्ञानायतनं जन्म निर्मितम् ।

१६—१ न ब्रह्मविदः आगाम्याग्निहोत्रादि संभवति । सगुणासु तु विद्यासु भवति ।

१८ विद्या युक्तं कर्माग्निहोत्रादिकं विद्याविहीनात्कर्मणोऽग्निहोत्राद्विशिष्टम् ।

१९ आरब्धकार्यक्षये विदुषः कैवल्यम श्यं भवति ।

द्वितीयः पादः उत्क्रांतिगातिनिरूपणाख्यः ।

१— २ अपरा विद्या । प्रायणकाले वाङ्मनसि संपद्यते ।

३ मनः प्राणे ।

४— ६ प्राणः विज्ञानात्मनि जीवे । प्राणसंपृक्तस्य जीवस्य तेजःसहचरितेषु भूतेष्ववस्थानम् ।

७ अविद्वान् पुनर्भवाय भूतसूक्ष्मामाश्रित्य रति । विद्वांस्तु ज्ञानप्रकाशितं मोक्षनाडीद्वारमाश्रयते ।

८—११ तेजआदि भूतसूक्ष्मं आ संसारमोक्षादवतिष्ठते ।

१२—१४ परा विद्या । अभावः परब्रह्मविदो गत्युत्क्रांत्योः ।

१५ परब्रह्मविदो कृत्स्नं कलाजातं ब्रह्मैव पद्यते ।

१६ विदुषः कलाप्रलयो निरवशेषः ।

१ अपरा विद्या । विद्वान्मूर्धन्यया शताधिकया नाड्या निष्क्रामति, इतराभिरितरे ।

१८—१९ शताधिकया रात्रिंदिवं अविशेषेण रश्म्यनु ारी ।

२० २१ दक्षिणायनेऽपि म्रियमाणो विद्वान् प्राप्नोत्ये विद्याफलम् ।

तृतीयः पादः सगुणविद्यावतो मृतस्योत्तरमार्गाभि ख्यः ।

१— ३ सर्वो ब्रह्म प्रेप्सुः अर्चिरादिनैवाध्वना रंहति। अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासांस्ता- न्मासेभ्यः संवत्सरं वत्सरादादित्यं आदित्याच्चंद्रमसं चंद्रमसो विद्युतं विद्युतः वरुण ोकं वरुणादधि इंद्रप्र- जापती ।

४— ६ आतिवाहिका एवैते ।

—१४ एनान्ब्रह्म गमयति। कार्यमेव सगुणमपरं ब्रह्मैतत्

१५—१६ न प्रतीकालंबनानां इतरैस्तुल्यफलत्वम् ।

चतुर्थः पादः प्राप्तिब्रह्मलोकस्थितिनिरूपणाख्यः ।

१— ३ परा विद्या। देवलोकाद्युपभोगस्थानेषु केवलेनैवात्मना आविर्भवति ।

४ परस्मादात्मनः अविभागेनैवावतिष्ठते ।

५— आत्मरूपस्यार्थभेदाः ।

८— ९ संकल्पबलादेव चैषां यावत्प्रयोजनं स्थैर्योपपात्तिः ।

१०—१४ अभावः शरीरेंद्रियाणां मोक्षे ।

१५—१६ एकोऽपि विद्वानैश्वर्ययोगात्सर्वाणि शरीराण्याविशति ।

१ —२२ गदुत्पत्त्यादिव्यापारं वर्जयित्वा अन्यदणिमाद्यात्मकमैश्वर्यं मुक्तानां भवितुमर्हति। म्यग्दर्शनविध्वस्त तम ां सिद्धै- वानावृत्तिः ।

|| ॐ तत्सत् ||

## श्रीमच्छंकराचार्यविरचितं

# ह्मसूत्रभा यम्



## प्रथमः समन्वयाध्यायः ।

### प्रथमाध्याये प्रथमः पादः ।

उपोद्घातः ।

युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोः तमःप्रकाशवद्विरुद्धस्वभावयोरि रेतरभावानुपपत्तौ सिद्धायां तद्धर्माणामपि तरामितरेतरभावानुपपत्तिः, इत्यतोऽस्मत्प्रत्ययगोचरे विषयिणि चिदात्मके युष्मत्प्रत्ययगोचरस्य विषयस्य तद्धर्माणां चाध्यासः, तद्विपर्ययेण विषयिणस्तद्धर्माणां च विषयेऽध्यासो मिथ्येति भवितुं युक्तम् । तथाप्यन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्येतरेतराविवेकेन, अत्यंतावि विक्तयोर्धर्मधर्मिणोर्मिथ्याज्ञाननिमित्तः सत्यानृते मिथुनीकृत्य, अहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहारः ॥ आह— कोऽयमध्यासो नामेति । उच्यते— स्मृतिरूपः परत्र पूर्वदृष्टावभासः । तं केचिदन्यत्रान्यधर्माध्यास इति वदन्ति । केचित्तु यत्र यदध्यासस्तद्विवेकाग्रहनिबंधनो भ्रम इति । अन्ये तु यत्र यदध्यासस्तस्यैव विपरीतधर्मत्वकल्पनामाचक्षते । सर्वथापि त्वन्यस्यान्यधर्मावभासतां न व्यभिचरति । तथाच लोकेऽनुभवः—शुक्तिका हि रजतवदवभासते, एकश्चंद्रः सद्वितीयवदिति ॥

कथं पुनः प्रत्यगात्मन्यविषयेऽध्यासो विषयतद्धर्माणाम् । सर्वो हि पुरोऽवस्थिते एव विषये विषयान्तरमध्यस्यति, युष्मत्प्रत्ययापेतस्य च प्रत्यगात्मनोऽविषयत्वं ब्रवीषि । उच्यते—न तावदयमेकान्तेनाविषयः, अस्मत्प्रत्ययविषयत्वात्, अपरोक्षत्वाच्च प्रत्यगात्मप्रसिद्धेः । नचायमस्ति नियमः पुरोवस्थिते एव विषये विषयान्तरमध्यसितव्यमिति । अप्रत्यक्षेऽपि ह्याकाशे बालास्तलमलिनताद्यध्यस्यन्ति । एवमविरुद्धः प्रत्यगात्मन्यप्यनात्माध्यासः ।

तमेतमेवंल णमध्यासं पंडिता अविद्येति मन्यन्ते । तद्विवेकेन च स्तुस्व-

रूपावधारणं विद्यामाहुः । तत्रैवं सति यत्र यदध्यासस्तत्कृतेन दोषेण गुणेन वाऽणुमात्रेणापि स न संबध्यते, तमेतमविद्याख्यमात्मानात्मनोरितरेतराध्यासं पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ताः सर्वाणि च शास्त्राणि विधिप्रतिषेधमोक्षपराणि । कथं पुनरविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि शास्त्राणि चेति । उच्यते—देहेंद्रियादिष्वहंममाभिमानरहितस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्तेः । नहींद्रियाण्यनुपादाय प्रत्यक्षादिव्यवहारः संभवति । नचाधिष्ठानमंतरेणेंद्रियाणां व्यवहारः संभवति । न चानध्यस्तात्मभावेन देहेन कश्चिद्व्याप्रियते । न चैतस्मिन्सर्वस्मिन्नसति असंगस्यात्मनः प्रमातृत्वमुपपद्यते । न च प्रमातृत्वमंतरेण प्रमाणप्रवृत्तिरस्ति । तस्मादविद्यावद्विषयाण्येव प्रत्यक्षादीनि प्रमाणानि शास्त्राणि चेति । पश्वादिभिश्चाविशेषात् । यथाहि पश्वादयः शब्दादिभिः श्रोत्रादीनां संबंधे सति शब्दादिविज्ञाने प्रतिकूले जाते ततो निवर्तन्ते अनुकूले च प्रवर्तन्ते, यथा दंडोद्यतकरं पुरुषमभिमुखमुपलभ्य मां हंतुमयमिच्छतीति पलायितुमारभन्ते, हरिततृणपूर्णपाणिमुपलभ्य तं प्रत्यभिमुखीभवन्ति, एवं पुरुषा अपि व्युत्पन्नचित्ताः क्रूरदृष्टीनाक्रोशतः खड्गोद्यतकरान्बलवत उपलभ्य ततो निवर्तन्ते, तद्विपरीतान्प्रत्यभिमुखीभवन्ति । अतः समानः पश्वादिभिः पुरुषाणां प्रमाणप्रमेयव्यवहारः । पश्वादीनां च प्रसिद्धोऽविवेकपुरःसरः प्रत्यक्षादिव्यवहारः । तत्सामान्यदर्शनाद्व्युत्पत्तिमतामपि पुरुषाणां प्रत्यक्षादिव्यवहारस्तत्कालः समान इति निश्चीयते । शास्त्रीये तु व्यवहारे यद्यपि बुद्धिपूर्वकारी नाविदित्वात्मनः परलोकसंबंधमधिक्रियते, तथापि न वेदान्तवेद्यमशनायाद्यतीतमपेतब्रह्मक्षत्रादिभेदं असंसार्यात्मतत्त्वमधिकारेऽपेक्ष्यते, अनुपयोगादधिकारविरोधाच्च । प्राक्च तथाभूतात्मविज्ञानात्प्रवर्तमानं शास्त्रं अविद्यावद्विषयत्वं नातिवर्तते । तथाहि—'ब्राह्मणो यजेत' इत्यादीनि शास्त्राण्यात्मनि वर्णाश्रमवयोवस्थादिविशेषाध्यासमाश्रित्य प्रवर्तन्ते । अध्यासो नाम अतस्मिंस्तद्बुद्धिरित्यवोचाम । तद्यथा पुत्रभार्यादिषु विकलेषु सकलेषु वा अहमेव विकलः सकलो वेति बाह्यधर्मानात्मन्यध्यस्यति, तथा देहधर्मान्— स्थूलोऽहं, कृशोऽहं, गौरोऽहं, तिष्ठामि, गच्छामि, लंघयामि चेति । तथेंद्रियधर्मान्—मूकः, काणः, क्लीबः, बधिरः, अंधोऽहमिति । त । अंतःकरणधर्मान्कामसंकल्पविचिकित्साध्यवसा-

यादीन् । एवमहंप्रत्ययिनमशेषस्वप्रचारसाक्षिणि प्रत्यगात्मन्यध्यस्य तं च प्रत्यगात्मानं सर्वसाक्षिणं तद्विपर्ययेणान्तःकरणादिष्वध्यस्यति । एवमयमनादिः अनंतो नैसर्गिकोऽध्यासो मिथ्याप्रत्ययरूपः कर्तृत्वभोक्तृत्वप्रवर्तकः सर्वलोकप्रत्यक्षः । अस्यानर्थहेतोः प्रहाणाय आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते । यथाचायमर्थः सर्वेषां वेदान्तानां, तथा वयमस्यां शारीरकमीमांसायां प्रदर्शयिष्यामः ॥

१ * जिज्ञासाधिकरणम् । सू० १ ।

वेदान्तमीमांसाशास्त्रस्य व्याचिख्यासितस्य इदमादिमं सूत्रम्—

**अथातो ब्रह्मजिज्ञासा ॥१॥**

तत्राथशब्द आनंतर्यार्थः परिगृह्यते, नाधिकारार्थः, ब्रह्मजिज्ञासाया अनधिकार्यत्वात् । मंगलस्य च वाक्यार्थे समन्वयाभावात् । अर्थान्तरप्रयुक्त एव ह्यथशब्दः श्रुत्या मंगलप्रयोजनो भवति, पूर्वप्रकृतापेक्षायाश्च फलतः आनंतर्याव्यतिरेकात् । सति चानंतर्यार्थत्वे यथा धर्मजिज्ञासा पूर्ववृत्तं वेदाध्ययनं नियमेनापेक्षते, एवं ब्रह्मजिज्ञा ।पि यत्पूर्ववृत्तं नियमेनापेक्षते तद्वक्तव्यम् । स्वाध्यायानंतर्यं तु समानम् । नन्विह कर्मावबोधानंतर्यं विशेषः । न । धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेः । यथाच हृदयाद्यवदानानामानंतर्यनियमः, क्रमस्य विवक्षितत्वान्न तथेह क्रमो विवक्षितः, शेषशेषित्वेऽधिकृताधिकारे वा प्रमाणाभावात् धर्मब्रह्मजिज्ञासयोः, फलजिज्ञास्यभेदाच्च । अभ्युदयफलं धर्मज्ञानं, तच्चानुष्ठानापेक्षम् । निःश्रेयसफलं तु ब्रह्मज्ञानं न चानुष्ठानान्तरापेक्षम् । भव्यश्च धर्मो जिज्ञास्यो न ज्ञानकालेऽस्ति, पुरुषव्यापारतंत्रत्वात् । इह तु भूतं ब्रह्म जिज्ञास्यं नित्यवृत्तत्वान्न पुरुषव्यापारतंत्रम् । चोदनाप्रवृत्तिभेदाच्च । या हि चोदना धर्मस्य लक्षणं सा स्वविषये नियुंजानैव पुरुषमवबोधयति । ब्रह्मचोदना तु पुरुषमवबोधयत्येव केवलं, अवबोधस्य चोदनाऽजन्यत्वान्न पुरुषोऽवबोधे नियुज्यते । यथाक्षार्थसंनिकर्षेणार्थावबोधे तद्वत् । तस्मात्किमपि वक्तव्यं यदनंतरं ब्रह्मजिज्ञासोपदिश्यत इति । उच्यते— नित्यानित्यवस्तुविवेकः, इहामुत्रार्थभोगविरागः,

* अधिकरणमिति–विषयः संदेहः संगतिः पूर्वपक्षः सिद्धान्तः इत्येकैकमधि रणं पंचावयवं ज्ञेयम् ।

शमदमादिसाधनसंपत्, मुमुक्षुत्वं च। तेषु हि त्सु प्रागपि धर्मजिज्ञासाया ऊर्ध्वं च शक्यते ब्रह्म जिज्ञासितुं ज्ञातुं च, न विपर्यये। तस्मादथशब्देन यथोक्तसाधनसंपत्त्यानंतर्यमुपदिश्यते॥

अतःशब्दो हेत्वर्थः। यस्माद्वेद एवाग्निहोत्रादीनां श्रेयः ाधनानां अनित्यफलतां दर्शयति— 'यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इत्यादिः। था ब्रह्मज्ञानादपि परं पुरुषार्थं दर्शयाति— 'ब्रह्मविदाप्नोति परम्' इत्यादिः। तस्माद्यथोक्तसाधनसंपत्त्यनंतरं ब्रह्मजिज्ञासा कर्तव्या॥

ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञा ा। ब्रह्म च वक्ष्यमाणलक्षणं 'जन्माद्यस्य यतः' इति। अतएव न ब्रह्मशब्दस्य जात्याद्यर्थांतरमाशंकितव्यम्। ब्रह्मण इति कर्मणिषष्ठी न शेषे, जिज्ञास्यापेक्षत्वाज्जिज्ञासायाः, जिज्ञास्यान्तरानिर्देशाच्च। ननु शेषषष्ठीपरिग्रहेऽपि ब्रह्मणो जिज्ञासाकर्मत्वं न विरुध्यते, संबंधसामान्यस्य विशेषनि त्वात्। एवमपि प्रत्यक्षं ब्रह्मणः कर्मत्वमुत्सृज्य सामान्यद्वारेण परोक्षं कर्मत्वं कल्पयतो व्यर्थः प्रयासः स्यात्। न व्यर्थः, ब्रह्माश्रिताशेषविचारप्रतिज्ञानार्थत्वादिति चेन्न, प्रधानपरिग्रहे तदपेक्षितानामप्यर्थाक्षिप्तत्वात्। ब्रह्म हि ज्ञानेनाप्तुमिष्टतमत्वात्प्रधानम्। तस्मिन्प्रधाने जिज्ञासाकर्मणि परिगृहीते यैर्जिज्ञासितैर्विना ब्रह्म जिज्ञासितं न भवति, तान्यर्थाक्षिप्तान्येवेति न पृथक्सूत्रयितव्यानि। यथा राजासौ गच्छतीत्युक्ते सपरिवारस्य राज्ञो गमनमुक्तं भवति तद्वत्। श्रुत्यनुगमाच्च। 'यतो वा इमानि भूतानि जायन्ते' इत्याद्याः श्रुतयः, 'तद्विजिज्ञासस्व तद्ब्रह्म' इति प्रत्यक्षमेव ब्रह्मणो जिज्ञासाकर्मत्वं दर्शयन्ति। तच्च कर्मणिषष्ठीपरिग्रहे सूत्रेणानुगतं भवति। तस्माद्ब्रह्मण इति कर्मणिषष्ठी॥ ज्ञातुमिच्छा जिज्ञासा। अवगतिपर्यंतं ज्ञानं सन्वाच्याया इच्छायाः कर्म फलविषयत्वादिच्छायाः। ज्ञानेन हि प्रमाणेनावगंतुमिष्टं ब्रह्म। ब्रह्मावगतिर्हि पुरुषार्थः, निःशेषसंसारबीजाविद्याद्यनर्थनिबर्हणात्। तस्माद्ब्रह्म जिज्ञासितव्यम्॥ तत्पुनर्ब्रह्म प्रसिद्धमप्रसिद्धं वा स्यात्। यदि प्रसिद्धं न जिज्ञासितव्यम्। अथाप्रसिद्धं नैव शक्यं जिज्ञासितुमिति। उच्यते— अस्ति तावद्ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावं, सर्वज्ञं, सर्वशक्तिसमन्वितम्। ब्रह्मशब्दस्य हि व्युत्पाद्यमानस्य नित्यशुद्धत्वादयोऽर्थाः प्रतीयन्ते,

बृंहतेर्धातोरर्थानुगमात् । सर्वस्यात्मत्वाच्च ब्रह्मास्तित्वप्रसिद्धिः । सर्वो ह्यात्मास्तित्वं प्रत्येति, न नाहमस्मीति । यदि हि नात्मास्तित्वप्रसिद्धिः स्यात् सर्वो लोको नाहमस्मीति प्रतीयात् । आत्मा च ब्रह्म । यदि तर्हि लोके ब्रह्मात्मत्वेन प्रसिद्धमस्ति ततो ज्ञातमेवेत्यजिज्ञास्यत्वं पुनरापन्नम् । न । तद्विशेषं प्रति विप्रतिपत्तेः । देहमात्रं चैतन्यविशिष्टमात्मेति प्राकृता जना लौकायतिकाश्च प्रतिपन्नाः । इंद्रियाण्येव चेतनान्यात्मेत्यपरे । मन इत्यन्ये । विज्ञानमात्रं क्षणिकमित्येके । शून्यमित्यपरे । अस्ति देहादिव्यतिरिक्तः संसारी कर्ता भोक्तेत्यपरे । भोक्तैव केवलं न कर्तेत्येके । अस्ति तद्व्यतिरिक्त ईश्वरः सर्वज्ञः सर्वशक्तिरिति केचित् । आत्मा स भोक्तुरित्यपरे । एवं बहवो विप्रतिपन्ना युक्तिवाक्यतदाभाससमाश्रयाः सन्तः । तत्राविचार्य यत्किंचित्प्रतिपद्यमानो निःश्रेयसात्प्रतिहन्येत अनर्थं चेयात् । तस्मात् ब्रह्मजिज्ञासोपन्यासमुखेन वेदान्तवाक्यमीमांसा तदविरोधितर्कोपकरणा निःश्रेयसप्रयोजना प्रस्तूयते ॥

**२ जन्माद्यधिकरणम् । सू० २ ।**

ब्रह्म जिज्ञासितव्यमित्युक्तम् । किंलक्षणं पुनस्तत् ब्रह्म इत्यत आह भगवान्सूत्रकारः—

**जन्माद्यस्य यतः ॥२॥**

जन्मोत्पत्तिरादिरस्येति तद्गुणसंविज्ञानो बहुव्रीहिः । जन्मस्थितिभंगं समासार्थः । जन्मनश्चादित्वं श्रुतिनिर्देशापेक्षं वस्तुवृत्तापेक्षं च । श्रुतिनिर्देशस्तावत् 'यतो वा इमानि भूतानि जायन्ते' इत्यस्मिन्वाक्ये जन्मस्थितिप्रलयानां क्रमदर्शनात् । वस्तुवृत्तमपि, जन्मना लब्धसत्ताकस्य धर्मिणः स्थितिप्रलय भवात् । अस्येति प्रत्यक्षादिसंनिधापितस्य धर्मिण इदमा निर्देशः । षष्ठी जन्मादिधर्मसंबंधार्था । यत इति कारणनिर्देशः । अस्य जगतो नामरूपाभ्यां व्याकृतस्यानेककर्तृभोक्तृसंयुक्तस्य प्रतिनियतदेशकालनिमित्तक्रियाफलाश्रयस्य मनसाप्यचिंत्यरचनारूपस्य जन्मस्थितिभंगं यतः सर्वज्ञात्सर्वशक्तेः कारणाद्भवति तद्ब्रह्मेति वाक्यशेषः । अन्येषामपि भावविकाराणां त्रिष्वेवान्तर्भाव इति जन्मस्थितिनाशानामिह ग्रहणम् । यास्कपरिपठितानां तु "जायतेऽस्ति" इत्यादीनां ग्रहणे तेषां जगतः स्थितिकाले संभाव्यमानत्वान्मूलकारणादुत्पत्तिस्थितिनाशा जगतो न गृहीताः स्युरित्याशंक्येत, तन्मा शंकि

इति योत्पत्तिर्ब्रह्मणः कारणात् तत्रैव स्थितिः प्रलयश्च त एव गृह्यन्ते । नच यथोक्तविशेषणस्य जगतो यथोक्तविशेषणमीश्वरं मुक्त्वान्यतः प्रधानादचेतनादणुभ्यो वाऽभावाद्वा सारिणो वा उत्पत्त्यादि संभावयितुं शक्यम् । नच स्वभावतः, विशिष्टदेशकालनिमित्तानामिहोपादानात् । एतदेवानुमानं संसारिव्यतिरिक्तेश्वरास्तित्वादि साधनं मन्यन्ते ईश्वरकारणवादिनः ॥

नन्विहापि तदेवोपन्यस्तं जन्मादिसूत्रे । न । वेदान्तवाक्यकुसुमग्रथनार्थत्वात्सूत्राणाम् । वेदान्तवाक्यानि हि सूत्रैरुदाहृत्य विचार्यन्ते । वाक्यार्थविचारणाध्यवसाननिर्वृत्ता हि ब्रह्मावगतिर्नानुमानादिप्रमाणान्तरनिर्वृत्ता । सत्सु तु वेदान्तवाक्येषु जगतो जन्मादिकारणवादिषु, तदर्थग्रहणदार्ढ्यायानुमानमपि वेदान्तवाक्याविरोधि प्रमाणं भवन्न निवार्यते, श्रुत्यैव च सहायत्वेन तर्कस्याप्यभ्युपेतत्वात् । तथाहि—'श्रोतव्यो मन्तव्यः' इति श्रुतिः 'पंडितो मेधावी गंधारानेवोपसंपद्येतैवमेवेहाचार्यवान्पुरुषो वेद' इति च पुरुषबुद्धिसाहाय्यमात्मनो दर्शयति । न धर्मजिज्ञासायामिव श्रुत्यादय एव प्रमाणं ब्रह्मजिज्ञासायाम् । किंतु श्रुत्यादयोऽनुभवादयश्च यथासंभवमिह प्रमाणं, अनुभवावसानत्वाद्भूतवस्तुविषयत्वाच्च ब्रह्मज्ञानस्य । कर्तव्ये हि विषये नानुभवापेक्षास्तीति श्रुत्यादीनामेव प्रामाण्यं स्यात्पुरुषाधीनात्मलाभत्वाच्च कर्तव्यस्य । कर्तुमकर्तुमन्यथा वा कर्तुं शक्यं लौकिकं वैदिकं च कर्म, यथाश्वेन गच्छति, पद्भ्यामन्यथा वा न वा गच्छतीति । तथा "अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णाति', "उदिते जुहोति, अनुदिते जुहोति" इति विधिप्रतिषेधाश्चात्रार्थवन्तः स्युः, विकल्पोत्सर्गापवादाश्च । नतु वस्त्वेवं नैवमस्ति नास्तीति वा विकल्प्यते । विकल्पनास्तु पुरुषबुद्ध्यपेक्षाः । न वस्तुयाथात्म्यज्ञानं पुरुषबुद्ध्यपेक्षम् । किं तर्हि वस्तुतंत्रमेव तत् । नहि स्थाणावेकस्मिन्स्थाणुर्वा पुरुषोऽन्यो वेति तत्त्वज्ञानं भवति । तत्र पुरुषोऽन्यो वेति मिथ्याज्ञानम् । स्थाणुरेवेति तत्त्वज्ञानं, वस्तुतंत्रत्वात् । एवं भूतवस्तुविषयाणां प्रामाण्यं वस्तुतंत्रम् । तत्रैवं सति ब्रह्मज्ञानमपि वस्तुतंत्रमेव, भूतवस्तुविषयत्वात् । ननु भूतवस्तुविषयत्वे ब्रह्मणः प्रमाणान्तरविषयत्वमेवेति वेदान्तवाक्यविचारणानार्थिकैव प्राप्ता । न । इंद्रियाविषयत्वेन संबंधाग्रहणात् । स्वभावतो विषयविषयाणींद्रियाणि, न ब्रह्मविषयाणि । सति हींद्रिय-

विषयत्वे ब्रह्मणः, इदं ब्रह्मणा संबद्धं कार्यमिति गृह्येत । कार्यमात्रमेव तु गृह्यमाणं किं ब्रह्मणा संबद्धं किमन्येन केनचिद्वा संबद्धम्—इति न शक्यं निश्चेतुम् । तस्माज्जन्मादिसूत्रं नानुमानोपन्यासार्थं किं तर्हि वेदान्तवाक्यप्रदर्शनार्थम् । किं पुनस्तद्वेदान्तवाक्यं यत्सूत्रेणेह लिलक्षयिषितम् । 'भृगुर्वै वारुणिः । वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति' इत्युपक्रम्याह—'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेति ।' तस्य च निर्णयवाक्यम्—'आनंदाद्ध्येव खल्विमानि भूतानि जायन्ते । आनंदेन जातानि जीवन्ति । आनंदं प्रयन्त्यभिसंविशन्ति' इति अन्यान्यप्येवंजातीयकानि वाक्यानि नित्यशुद्धबुद्धमुक्तस्वभाव सर्वज्ञस्वरूपकारणविषयाण्युदाहर्तव्यानि ॥

## ३ शास्त्रयोनित्वाधिकरणम् । सू० ३ ।

जगत्कारणत्वप्रदर्शनेन सर्वज्ञं ब्रह्मेत्युपक्षिप्तं तदेव द्रढयन्नाह—

**शास्त्रयोनित्वात् ॥३॥**

महत ऋग्वेदादेः शास्त्रस्यानेकविद्यास्थानोपबृंहितस्य प्रदीपवत्सर्वार्थावद्योतिनः सर्वज्ञकल्पस्य योनिः कारणं ब्रह्म । नहीदृशस्य शास्त्रस्यर्ग्वेदादिलक्षणस्य सर्वज्ञगुणान्वितस्य सर्वज्ञादन्यतः संभवोऽस्ति । यद्यद्विस्तरार्थं शास्त्रं यस्मात्पुरुषविशेषात्संभवति, यथा व्याकरणादि पाणिन्यादेर्ज्ञेयैकदेशार्थमपि, स ततोऽप्यधिकतरविज्ञान इति प्रसिद्धं लोके । किमु वक्तव्यं अनेकशाखाभेदभिन्नस्य देवतिर्यङ्मनुष्यवर्णाश्रमादिप्रविभागहेतोर्ऋग्वेदाद्याख्यस्य सर्वज्ञानाकरस्याप्रयत्नेनैव लीलान्यायेन पुरुषनिःश्वासवद्यस्मान्महतो भूताद्योनेः संभवः,—'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः' इत्यादिश्रुतेः—तस्य महतो भूतस्य निरतिशयं सर्वज्ञत्वं सर्वशक्तिमत्त्वं चेति ॥ अथवा यथोक्तमृग्वेदादिशास्त्रं योनिः कारणं प्रमाणमस्य ब्रह्मणो यथावत्स्वरूपाधिगमे । शास्त्रादेव प्रमाणाज्जगतो जन्मादिकारणं ब्रह्माधिगम्यते इत्यभिप्रायः । शास्त्रमुदाहृतं पूर्वसूत्रे—'यतो वा इमानि भूतानि जायन्ते' इत्यादि । किमर्थं तर्हीदं सूत्रं, यावता पूर्वसूत्रेणैवैवंजातीयकं शास्त्रमुदाहरता शास्त्रयोनित्वं ब्रह्मणो दर्शितम् । उच्यते—तत्र पूर्वसूत्राक्षरेण स्पष्टं शास्त्रस्यानुपादानाज्जन्मादिसूत्रेण केवलमनुमानमुपन्यस्तमित्याशंक्येत तामाशंकां निवर्तयितुमिदं

सूत्रं प्रववृते शास्त्रयोनित्वादिति ॥
४ समन्वयाधिकरणम् । ०४ ।

कथं पुनर्ब्रह्मणः शास्त्रप्रमाणकत्वमुच्यते, यावता "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" इति क्रियापरत्वं शास्त्रस्य प्रदर्शितम् । अतो वेदान्तानामानर्थक्यं, अक्रियार्थत्वात् । कर्तृदेवतादिप्रकाशनार्थत्वेन वा क्रियाविधिशेषत्वं, उपासनादिक्रियान्तरविधानार्थत्वं वा । नहि परिनिष्ठितवस्तुप्रतिपादनं संभवति, प्रत्यक्षादिविषयत्वात्परिनिष्ठितवस्तुनः, तत्प्रतिपादने च हेयोपादेयरहिते पुरुषार्थाभावात् । अतएव 'सोऽरोदीत्' इत्येवमादीनामानर्थक्यं मा भूदिति "विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः" इति स्तावकत्वेनार्थवत्त्वमुक्तम् । मंत्राणां च "इषे त्वा" इत्यादीनां क्रियातत्साधनाभिधायकत्वेन कर्मसमवायित्वमुक्तम् । अतो न क्वचिदपि वेदवाक्यानां विधिसंस्पर्शमंतरेणार्थवत्ता दृष्टोपपन्ना वा । न च परिनिष्ठिते वस्तुस्वरूपे विधिः संभवति, क्रियाविषयत्वाद्विधेः । तस्मात्कर्मापेक्षितकर्तृदेवतादिस्वरूपप्रकाशनेन क्रियाविधिशेषत्वं वेदान्तानाम् । अथ प्रकरणान्तरभयान्नैतदभ्युपगम्यते, तथापि स्ववाक्यगतोपासनादिकर्मपरत्वम् । तस्मान्न ब्रह्मणः शास्त्रयोनित्वं, इति प्राप्ते उच्यते—

तत्तु समन्वयात् ॥४॥

तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । तद्ब्रह्म सर्वज्ञं सर्वशक्ति जगदुत्पत्तिस्थितिलयकारणं वेदान्तशास्त्रादेवावगम्यते । कथम्, समन्वयात् । सर्वेषु हि वेदान्तेषु वाक्यानि तात्पर्येणैतस्यार्थस्य प्रतिपादकत्वेन समनुगतानि । 'सदेव सोम्येदमग्र आसीत् । एकमेवाद्वितीयम्' 'आत्मा वा इदमेक एवाग्र आसीत्' 'तदेतद्ब्रह्मापूर्वमनपरमनंतरमबाह्यम्' 'अयमात्मा ब्रह्म सर्वानुभूः' 'ब्रह्मैवेदममृतं पुरस्तात्' इत्यादीनि । नच तद्गतानां पदानां ब्रह्मस्वरूपविषये निश्चिते समन्वयेऽवगम्यमानेऽर्थान्तरकल्पना युक्ता, श्रुतहान्यश्रुतकल्पनाप्रसंगात् । नच तेषां कर्तृस्वरूपप्रतिपादनपरतावसीयते, 'तत्केन कं पश्येत्' इत्यादि क्रियाकारकफलनिराकरणश्रुतेः । नच परिनिष्ठितवस्तुस्वरूपत्वेऽपि प्रत्यक्षादिविषयत्वं ब्रह्मणः, 'तत्त्वमसि' इति ब्रह्मात्मभावस्य शास्त्रमंतरेणानवगम्यमानत्वात् । यत्तु हेयोपादेयरहितत्वादुपदेशानर्थक्यमिति, नैष दोषः,

हेयोपादेयशून्यब्रह्मात्मतावगमादेव सर्वक्लेशप्रहाणात्पुरुषार्थसिद्धेः। देवतादिप्रतिपादनपरस्य तु स्ववाक्यगतोपासनार्थत्वेऽपि न कश्चिद्विरोधः । ननु तथा ब्रह्मण उपासनाविधिशेषत्वं संभवति, एकत्वे हेयोपादेयशून्यतया क्रियाकारकादिद्वैतविज्ञानोपमर्दोपपत्तेः । नहि ब्रह्मैकत्वविज्ञानेनोन्मथितस्य द्वैतविज्ञानस्य पुनः संभवोऽस्ति, येनोपासनाविधिशेषत्वं ब्रह्मणः प्रतिपाद्येत । यद्यप्यन्यत्र वेदवाक्यानां विधिसंस्पर्शमंतरेण प्रमाणत्वं न दृ ं, तथाप्यात्मविज्ञानस्य फलपर्यंतत्वान्न तद्विषयस्य शास्त्रस्य प्रामाण्यं शक्यं प्रत्याख्यातुम् । न चानुमानगम्यं शास्त्रप्रामाण्यं, येनान्यत्र दृष्टं निदर्शनमपेक्षेत । तस्मात्सिद्धं ब्रह्मणः शास्त्रप्रमाणकत्वम् ॥

अत्रापरे प्रत्यवतिष्ठन्ते— यद्यपि शास्त्रप्रमाणकं ब्रह्म तथापि प्रतिपत्तिविधिविषयतयैव शास्त्रेण ब्रह्म समर्प्यते । यथा यूपाहवनीयादीन्यलौकिकान्यपि विधिशेषतया शास्त्रेण समर्प्यन्ते तद्वत् । कुत एतत्? प्रवृत्तिनिवृत्तिप्रयोजनपरत्वाच्छास्त्रस्य । तथाहि शास्त्रतात्पर्यविद आहुः— "दृष्टो हि तस्यार्थः कर्मावबोधनं" इति । "चोदनेति क्रियायाः प्रवर्तकं वचनम्" "तस्य ज्ञानमुपदेशः" "तद्भूतानां क्रियार्थेन समाम्नायः" "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" इति च । अतः पुरुषं क्वचिद्विषयविशेषे प्रवर्तयत्कुतश्चिद्विषयविशेषान्निवर्तयच्चार्थवच्छास्त्रम् । तच्छेषतया चान्यदुपयुक्तम् । तत्सामान्याद्वेदान्तानामपि तथैवार्थवत्त्वं स्यात् । सति च विधिपरत्वे यथा स्वर्गादिकामस्याग्निहोत्रादिसाधनं विधीयत, एवममृतत्वकामस्य ब्रह्मज्ञानं विधीयत इति युक्तम् । नन्विह जिज्ञास्यवैलक्षण्यमुक्तम्— कर्मकांडे भव्यो धर्मो जिज्ञास्य, इह तु भूतं नित्यनिर्वृत्तं ब्रह्म जिज्ञास्यमिति । तत्र धर्मज्ञानफलादनुष्ठानसापेक्षाद्विलक्षणं ब्रह्मज्ञानफलं भवितुमर्हति । नार्हत्येवं भवितुम् । कार्यविधिप्रयुक्तस्यैव ब्रह्मणः प्रतिपाद्यमानत्वात् । 'आत्मा वा अरे द्रष्टव्यः' इति । 'य आत्माऽपहतपाप्मा...सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' 'आत्मेत्येवोपासीत' 'आत्मानमेव लोकमुपासी ' 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिविधानेषु सत्सु, कोसावात्मा किं तत् ब्रह्म इत्याकांक्षायां त्स्वरूपसमर्पणेन सर्वे वेदान्ता उपयुक्ताः— नित्यः सर्वज्ञः र्वगतो नित्यतृप्तो नित्यशुद्धबुद्धमुक्तस्वभावो विज्ञानमानंदं ब्र इत्येवमादयः । तदुपासनाच्च

शास्त्रदृष्टोऽदृष्टो मोक्षः फलं भविष्यतीति । कर्तव्यविध्यननुप्रवेशे वस्तुमा थने हानोपादाना भवात्, सप्तद्वीपा वसुमती, राजा गौ गच्छति इत्यां वाक्यवद्वेदान्तवाक्यानामानर्थक्यमेव स्यात् । ननु वस्तुमात्रकथनेऽपि रज्रियं नायं र्प इत्यादौ भ्रान्तिजनितभीतिनिवर्तनेनार्थवत्त्वं दृष्टं, तथेहाप संसार्यात्मवस्तुकथनेन संसारित्वभ्रान्तिनिवर्तनेनार्थवत्त्वं स्यात् । स्यादेतदे यदि रज्ज स्वरूपश्रवणमात्रेण इव र्पभ्रान्तिः, सारित्वभ्रान्तिर्ब्रह्मस्वरूपश्र णमात्रेण निवर्तेत । नतु निवर्तते, श्रुतब्रह्मणोऽपि यथापूर्वं सुखदुःखादि सारिधर्मदर्शनात्, 'श्रोतव्यो मन्तव्यो निदिध्या तव्यः' इति च श्रवणोत्त कालयोः मनननिदिध्यासनयोर्विधिदर्शनात् । तस्मात्प्रतिपत्तिविधिविषयतयै शास्त्रप्रमाणकं ब्रह्माभ्युपगंतव्यमिति ॥

अत्राभिधीयते— न । कर्मब्रह्मविद्याफलयोर्वैलक्षण्यात् । शारीरं वाचि मानसं च कर्म श्रुतिस्मृतिसिद्धं धर्माख्यं, यद्विषया जिज्ञासा "अथातो धर्म जिज्ञा ा" इति सूत्रिता । अधर्मोऽपि हिंसादिः प्रतिषेधचोदनालक्षणत्वाज्जि ज्ञास्यः परिहाराय । तयोश्चोदनालक्षणयोरर्थानर्थयोर्धर्माधर्मयोः फले प्रत्य सु दुःखे शरीरवाङ्मनोभिरेवोपभुज्यमाने विषयेंद्रियसंयोगजन्ये ब्रह्मादि स्थावरान्तेषु प्रसिद्धे । मनुष्यत्वादारभ्य ब्रह्मान्तेषु देहवत्सु सुखतारतम्यमनु यते । तश्च तद्धेतोर्धर्मस्यापि तारतम्यं गम्यते । धर्मतारतम्यादधिकारि तारतम्यम् । प्रसिद्धं चार्थित्वसामर्थ्याविद्वत्तादिकृतमाधिकारितारतम्यम् तथाच यागाद्यनुष्ठायिनामेव विद्यासमाधिविशेषादुत्तरेण पथा गमनं, केवलै रिष्टापूर्तदत्तसाधनैर्धूमादिक्रमेण दक्षिणेन पथा गमनं, तत्रापि सुखतारतम त्साधनतारतम्यं च शास्त्रात् 'यावत्संपातमुषित्वा' इत्यस्माद्गम्यते । तथ मनुष्यादिषु स्थावरान्तेषु खलवश्चोदनालक्षणधर्मसाध्य एवेति गम्यते तारतम्येन वर्तमानः । तथोर्ध्वगतेष्वधोगतेषु च देहवत्सु दुःखतारतम्यदर्शी नात्तद्धेतोरधर्मस्य प्रतिषेधचोदनालक्षणस्य तदनुष्ठायिनां च तारतम्यं गम्यते एवमविद्यादिदोषवतां धर्माधर्मतारतम्यनिमित्तं शरीरोपादानपूर्वकं सुखदुःख ारतम्यमनित्यं सारूपं श्रुतिस्मृतिन्यायप्रसिद्धम् । तथाच श्रुतिः— 'न ह वै सशरीरस्य तः प्रियाप्रिययोरपहतिरस्ति' इति यथावर्णितं संसाररूपं अनुवदति । 'अशरीरं वाव न्तं न प्रियाप्रिये स्पृशतः' इति प्रियाप्रियस्प

र्शनप्रतिषेधाच्चोदनालक्षणधर्मकार्यत्वं मोक्षाख्यस्याशरीरत्वस्य प्रतिषिध्यत इति गम्यते। धर्मकार्यत्वे हि प्रियाप्रियस्पर्शनप्रतिषेधो नोपपद्यते । अशरीरत्वमेव धर्मकार्यमिति चेन्न, तस्य स्वाभाविकत्वात् । 'अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् । महान्तं विभुमात्मानं मत्वा धीरो न शोचति' 'अप्राणो ह्यमनाः शुभ्रः' 'असंगो ह्ययं पुरुषः' इत्यादिश्रुतिभ्यः । अत एवानुष्ठेयकर्मफलविलक्षणं मोक्षाख्यमशरीरत्वं नित्यमिति सिद्धम् । तत्र किंचित्परिणामि नित्यं यस्मिन्विक्रियमाणेऽपि तदेवेदमिति बुद्धिर्न विहन्यते । यथा पृथिव्यादिजगन्नित्यत्ववादिनाम् । यथा वा सांख्यानां गुणाः । इदं तु पारमार्थिकं कूटस्थनित्यं व्योमवत्सर्वव्यापि सर्वविक्रियारहितं नित्यतृप्तं निरवयवं स्वयंज्योतिःस्वभावं, यत्र धर्माधर्मौ सह कार्येण कालत्रयं च नोपावर्तेते । तदेतदशरीरत्वं मोक्षाख्यम् । 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च' इत्यादिश्रुतिभ्यः । अतस्तत् ब्रह्म यस्येयं जिज्ञासा प्रस्तुता । तद्यदि कर्तव्यशेषत्वेनोपदिश्येत, तेन च कर्तव्येन साध्यश्चेन्मोक्षोऽभ्युपगम्येत, अनित्य एव स्यात् । तत्रैवं सति यथोक्तकर्मफलेष्वेव तारतम्यावस्थितेष्वनित्येषु कश्चिदतिशयो मोक्ष इति प्रसज्येत । नित्यश्च मोक्षः सर्वैर्मोक्षवादिभिरभ्युपगम्यते । अतो न कर्तव्यशेषत्वेन ब्रह्मोपदेशो युक्तः । अपिच 'ब्रह्म वेद ब्रह्मैव भवति' 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' 'आनंदं ब्रह्मणो विद्वान् न बिभेति कुतश्चन' 'अभयं वै जनक प्राप्तोऽसि' 'तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत्' 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः' इत्येवमाद्याः श्रुतयो ब्रह्मविद्यानंतरमेव मोक्षं दर्शयन्त्यो मध्ये कार्यान्तरं वारयन्ति । तथा 'तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्च' इति ब्रह्मदर्शनसर्वात्मभावयोर्मध्ये कर्तव्यान्तरवारणायोदाहार्यम् । यथा तिष्ठन्गायतीति तिष्ठतिगायत्योर्मध्ये तत्कर्तृकं कार्यान्तरं नास्तीति गम्यते । 'त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि' 'श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तं मा भगवाञ्छोकस्य पारं तारयतु' 'तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान्सनत्कुमारः' इति चैवमाद्याः श्रुतयो मोक्षप्रतिबंधनिवृत्तिमात्रमेवात्मज्ञानस्य फलं दर्शयन्ति । तथाच आचार्यप्रणीतं

न्यायोपबृंहितं सूत्रं—'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनंतरापायादपवर्गः' इति। मिथ्याज्ञानापायश्च ब्रह्मात्मैकत्वविज्ञानाद्भवति।

चेदं ब्रह्मात्मैकत्वविज्ञानं संपद्रूपम्। यथा 'अनंतं वै मनोऽनंता विश्वेदेवा अनंतमेव स तेन लोकं जयति' इति। न चाध्यासरूपम्। यथा 'मनो ब्रह्मेत्युपासीत' 'आदित्यो ब्रह्मेत्यादेशः' इति च मनआदित्यादिषु ब्रह्मदृष्ट्यध्या :। नापि विशि क्रियायोगनिमित्तं 'वायुर्वाव वर्गः' 'प्राणो वाव संवर्गः' इतिवत्। नाप्याज्यावेक्षणादिकर्मवत्कर्मांग स्काररूपम्। संपदादिरूपे हि ब्रह्मात्मैकत्वविज्ञानेऽभ्युपगम्यमाने 'त्वमसि' 'अहं ब्रह्मास्मि' 'अयमात्मा ब्रह्म' इत्येवमादीनां वाक्यानां ब्रह्मात्मैकत्ववस्तुप्रतिपादनपरः पदसमन्वयः पीड्येत। 'भिद्यते हृदयग्रंथिश्छिद्यन्ते सर्व शयाः' इति चैवमादीन्यविद्यानिवृत्तिफलश्रवणान्युपरुध्येरन्। 'ब्रह्म वेद ब्रह्मैव भवति' इति चैवमादीनि तद्भावापत्तिवचनानि संपदादिरूपत्वे न सामंजस्येनोपपद्येरन्। तस्मान्न पदादिरूपं ब्रह्मात्मैकत्वविज्ञानम्। अतो न पुरुषव्यापारतंत्रा ब्रह्मविद्या। किं तर्हि प्रत्यक्षादिप्रमाणविषयवस्तुज्ञानवत् वस्तुतंत्रा। एवंभूतस्य ब्रह्मणतज्ज्ञानस्य च न कयाचिद्युक्त्या शक्यः कार्यानुप्रवेशः कल्पयितुम्। नच विदिक्रियाकर्मत्वेन कार्यानुप्रवेशो ब्रह्मणः, 'अन्यदेव तद्विदितादथो अविदितादधि' इति विदिक्रियाकर्मत्वप्रतिषेधात्, 'येनेदं सर्वं विजानाति तं केन विजानीयात्' इति च। तथोपास्तिक्रियाकर्मत्वप्रतिषेधोऽपि भवति—'यद्वाचानभ्युदितं येन वागभ्युद्यते' इत्यविषयत्वं ब्रह्मण उपन्यस्य, 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' इति। अविषयत्वे ब्रह्मणः शास्त्रयोनित्वानुपपत्तिरिति चेत्। न। अविद्याकल्पितभेदनिवृत्तिपरत्वाच्छास्त्रस्य। नहि शास्त्रमिदंतया विषयभूतं ब्रह्म प्रतिपिपादयिषति। किं तर्हि प्रत्यगात्मत्वेनाविषयतया प्रतिपादयदविद्याकल्पितं वेद्य—वेदितृ—वेदनादिभेदमपनयति। तथाच शा — 'यस्यामतं तस्य मतं मतं यस्य न वेद :। अविज्ञातं विजानतां विज्ञातमविजानताम्' 'न दृष्टेर्द्रष्टारं पश्येः... न विज्ञातेर्विज्ञातारं विजानीयाः' इति चैवमादि। अतोऽविद्याकल्पितसंसारित्वनिवर्तनेन नित्यमुक्तात्मस्वरूपसमर्पणान्न मोक्षस्यानित्यत्वदोषः। यस्य तूत्पाद्यो मोक्षः तस्य मानसं वाचिकं कायिकं वा कार्यमपेक्षते

इति युक्तम् । तथा विकार्यत्वे च तयोः पक्षयोर्मोक्षस्य ध्रुवमनित्यत्वम् । नहि दध्यादि विकार्यं, उत्पाद्यं वा घटादि, नित्यं दृ लोके । न चाप्यत्वेनापि कार्यापेक्षा, स्वात्मस्वरूपत्वे सत्यनाप्यत्वात् । स्वरूपव्यतिरिक्तत्वेऽपि ब्रह्मणो नाप्यत्वं, सर्वगतत्वेन नित्याप्तस्वरूपत्वात्सर्वेण ब्रह्मणः, आकाशस्येव । नापि ंस्कार्यो मोक्षः, येन व्यापारमपेक्षेत । संस्कारो हि नाम संस्कार्यस्य गुणाधानेन वा स्याद्दोषापनयनेन वा । न तावत् गुणाधानेन संभवति, अनाधेयातिशयब्रह्मस्वरूपत्वान्मोक्षस्य । नापि दोषापनयनेन, नित्यशुद्धब्रह्मस्वरूपत्वान्मोक्षस्य । स्वात्मधर्म एव संस्तिरोभूतो मोक्षः क्रिययात्मनि संस्क्रियमाणेऽभिव्यज्यते, यथा आदर्शे निघर्षणक्रियया ंस्क्रियमाणे भास्वरत्वं धर्म इति चेत् । न । क्रियाश्रयत्वानुपपत्तेरात्मनः । यदाश्रया क्रिया तमविकुर्वती नैवात्मानं लभते । यद्यात्मा स्वाश्रयक्रियया विक्रियेत अनित्यत्वमात्मनः प्रसज्येत । 'अविकार्योऽयमुच्यते' इति चैवमादीनि वाक्यानि बाध्येरन् । तच्चानि म् । तस्मान्न स्वाश्रया क्रिया आत्मनः संभवति । अन्याश्रयायास्तु क्रियाया अविषयत्वान्न तयात्मा संस्क्रियते ॥

ननु देहाश्रयया स्नानाचमनयज्ञोपवीतधारणादिकया क्रियया देही संस्क्रियमाणो दृष्टः । न । देहादिसंहतस्यैवाविद्यागृहीतस्यात्मनः संस्क्रियमाणत्वात् । प्रत्यक्षं हि स्नानाचमनादेर्देहसमवायित्वम् । तया देहाश्रयया त्संहत एव कश्चिदविद्ययात्मत्वेन परिगृहीतः संस्क्रियते इति युक्तम् । यथा देहाश्रयचिकित्सानिमित्तेन धातुसाम्येन तत्संहतस्य तदभिमानिनः आरोग्यफलं, अहमरोग इति यत्र बुद्धिरुत्पद्यते, एवं स्नानाचमनयज्ञोपवीतधारणादिना अहं शुद्धः संस्कृत इति यत्र बुद्धिरुत्पद्यते स संस्क्रियते । स च देहेन संहत एव । तेनैव ह्यहंकर्त्राहंप्रत्ययविषयेण प्रत्ययिना सर्वाः क्रिया निर्वर्त्यन्ते । तत्फलं च स एवाश्नाति, 'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्यो अभिचाकशीति' इति मंत्रवर्णात् । 'आत्मेंद्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' इति च । तथाच 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी र्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च' इति, ' पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्' इति च । एतौ मंत्रौ अनाधेयातिशयतां नित्यशुद्धतां च ब्रह्मणो दर्शयतः । ब्रह्म-

भावश्च मोक्षः । तस्मान्न संस्कार्योऽपि मोक्षः । अतोऽन्यन्मोक्षं प्रति क्रियानुप्रवेशद्वारं न शक्यं केनचिद्दर्शयितुम् । तस्माज्ज्ञानमेकं मुक्त्वा क्रियाया गंधमात्रस्याप्यनुप्रवेश इह नोपपद्यते ॥

ननु ज्ञानं नाम मानसी क्रिया । न । वैलक्षण्यात् । क्रिया हि नाम सा, यत्र वस्तुस्वरूपनिरपेक्षैव चोद्यते, पुरुषचित्तव्यापाराधीना च । यथा 'यस्यै देवतायै हविर्गृहीतं स्यात्तां मनसा ध्यायेद्वषट्करिष्यन्' इति, 'संध्यां मनसा ध्यायेत' इति चैवमादिषु । ध्यानं चिंतनं यद्यपि मानसं तथापि पुरुषेण कर्तुमकर्तुमन्यथा वा कर्तुं शक्यं, पुरुषतंत्रत्वात् । ज्ञानं तु प्रमाणजन्यम् । प्रमाणं च यथाभूतवस्तुविषयं, अतो ज्ञानं कर्तुमकर्तुमन्यथा वा कर्तुमशक्यम् । केवलं वस्तुतंत्रमेव तत् न चोदनातंत्रं नापि पुरुषतंत्रम् । तस्मान्मानसत्वेऽपि ज्ञानस्य महद्वैलक्षण्यम् । यथा च 'पुरुषो वाव गौतमाग्निः', 'योषा वाव गौतमाग्निः' इत्यत्र योषित्पुरुषयोरग्निबुद्धिर्मानसी भवति । केवलचोदनाजन्यत्वात्तु क्रियैव सा पुरुषतंत्रा च । या तु प्रसिद्धेऽग्नावग्निबुद्धिर्न सा चोदनातंत्रा नापि पुरुषतंत्रा । किं तर्हि प्रत्यक्षविषयवस्तुतंत्रैवेति ज्ञानमेवैतन्न क्रिया । एवं सर्वप्रमाणविषयवस्तुषु वेदितव्यम् । तत्रैवं सति यथाभूतब्रह्मात्मविषयमपि ज्ञानं न चोदनातंत्रम् । तद्विषये लिङादयः श्रूयमाणा अपि अनियोज्यविषयत्वात्कुंठीभवन्त्युपलादिषु प्रयुक्तक्षुरतैक्ष्ण्यादिवत्, अहेयानुपादेयवस्तुविषयत्वात् । किमर्थानि तर्हि 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यः' इत्यादीनि विधिच्छायानि वचनानि । स्वाभाविकप्रवृत्तिविषयविमुखीकरणार्थानीति ब्रूमः । यो हि बहिर्मुखः प्रवर्तते पुरुषः इष्टं मे भूयादनिष्टं मा भूदिति, नच तत्रात्यंतिकं पुरुषार्थं लभते, तमात्यंतिकपुरुषार्थवांछिनं स्वाभाविकात्कार्यकरणसंघातप्रवृत्तिगोचराद्विमुखीकृत्य प्रत्यगात्मस्रोतस्तया प्रवर्तयन्ति 'आत्मा वा अरे द्रष्टव्यः' इत्यादीनि । तस्यात्मान्वेषणाय प्रवृत्तस्याहेयमनुपादेयं चात्मतत्त्वमुपदिश्यते 'इदं सर्वं यदयमात्मा' 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् केन कं विजानीयात्' 'विज्ञातारमरे केन विजानीयात्' 'अयमात्मा ब्रह्म' इत्यादिभिः । यदपि अकर्तव्यप्रधानमात्मज्ञानं हानायोपादानाय वा न भवतीति, तत्तथैवेत्यभ्युपगम्यते । अलंकारो ह्ययमस्माकं यद्ब्रह्मात्मावगतौ सत्यां सर्वकर्तव्यताहानिः कृतकृत्यता चेति ।

तथाच श्रुतिः 'आत्मानं चेद्विजानीयादयमस्मीति पूरुषः । किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत्' इति । "एतद्बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत" इति च स्मृतिः। तस्मान्न प्रतिपत्तिविधिविषयतया ब्रह्मणः समर्पणम्॥

यदपि केचिदाहुः—प्रवृत्तिनिवृत्तिविधितच्छेषव्यतिरेकेण केवलवस्तुवादी वेदभागो नास्ति इति, तन्न । औपनिषदस्य पुरुषस्यानन्यशेषत्वात् । योऽसौ उपनिषत्स्वेवाधिगतः पुरुषोऽसंसारी ब्रह्मस्वरूपः उत्पाद्यादिचतुर्विधद्रव्याविलक्षणः स्वप्रकरणस्थोऽनन्यशेषः, नासौ नास्ति नाधिगम्यत इति वा शक्यं वदितुम्, 'स एष नेति नेत्यात्मा' इत्यात्मशब्दात्, आत्मनश्च प्रत्याख्यातुमशक्यत्वात्, य एव निराकर्ता तस्यैवात्मत्वात् । नन्वात्मा अहंप्रत्ययविषयत्वादुपनिषत्स्वेव विज्ञायत इत्यनुपपन्नम् । न । तत्साक्षित्वेन प्रत्युक्तत्वात् । नहि अहंप्रत्ययविषयकर्तृव्यतिरेकेण तत्साक्षी सर्वभूतस्थः सम एकः कूटस्थनित्यः पुरुषो विधिकांडे तर्कसमये वा केनचिदधिगतः सर्वस्यात्मा । अतः स न केनचित्प्रत्याख्यातुं शक्यो, विधिशेषत्वं वा नेतुम् । आत्मत्वादेव च सर्वेषां न हेयो नाप्युपादेयः । सर्वं हि विनश्यद्विकारजातं पुरुषान्तं विनश्यति । पुरुषो हि विनाशहेत्वभावादविनाशी, विक्रियाहेत्वभावाच्च कूटस्थनित्यः, अतएव नित्यशुद्धबुद्धमुक्तस्वभावः । तस्मात् 'पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' 'तं त्वौपनिषदं पुरुषं पृच्छामि' इति चौपनिषदत्वविशेषणं पुरुषस्योपनिषत्सु प्राधान्येन प्रकाश्यमानत्व उपपद्यते । अतो भूतवस्तुपरो वेदभागो नास्तीति वचनं साहसमात्रम् ॥

यदपि शास्त्रतात्पर्यविदामनुक्रमणम्—'दृष्टो हि तस्यार्थः कर्मावबोधनम्' इत्येवमादि, तद्धर्मजिज्ञासाविषयत्वाद्विधिप्रतिषेधशास्त्राभिप्रायं द्रष्टव्यम् । अपिच 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' इत्येतदेकान्तेनाभ्युपगच्छतां भूतोपदेशानर्थक्यप्रसंगः । प्रवृत्तिनिवृत्तिव्यतिरेकेण भूतं चेद्वस्तूपदिशति भव्यार्थत्वेन, कूटस्थनित्यं भूतं नोपदिशतीति को हेतुः। नहि भूतमुपदिश्यमानं क्रिया भवति । अक्रियात्वेऽपि भूतस्य क्रियासाधनत्वात्क्रियार्थ एव भूतोपदेश इति चेत् । नैष दोषः । क्रियार्थत्वेऽपि क्रियानिर्वर्तनशक्तिमद्वस्तूपदिष्टमेव । क्रियार्थत्वं तु प्रयोजनं तस्य । न चैतावता वस्त्वनुपदिष्टं भवति । यदि नामोपदिष्टं किं तव तेन स्यादिति, उच्यते—

अनवगतात्मवस्तूपदेशश्च तथैव भवितुमर्हति । दवगत्या मिथ्याज्ञानस्य सारहेतोर्निवृत्तिः प्रयोजनं क्रियते इत्यविशिष्टमर्थवत्त्वं क्रियासाधनवस्तूपदेशेन ।(अपिच 'ब्राह्मणो न हन्तव्यः' इति चैवमाद्या निवृत्तिरुपदिश्यते । नच सा क्रिया । नापि क्रियासाधनम् । अक्रियार्थाना ुपदेशोऽनर्थकश्चेत् 'ब्राह्मणो न हन्तव्यः' इत्यादिनिवृत्त्युपदेशानामानर्थक्यं प्राप्तम् । तच्चानिष्टम् । नच स्वभावप्राप्तहन्त्यर्थानुरागेण नञः शक्यमप्राप्तक्रियार्थत्वं कल्पयितुं, हननक्रियानिवृत्त्यौदासीन्यव्यतिरेकेण । नञश्चैष स्वभावो यत्स्वसंबंधिनोऽभावं बोधयतीति । अभावबुद्धिश्चौदासीन्ये कारणम् । । च दग्धेंधनाग्निवत्स्वयमेवोपशाम्यति । तस्मात्प्रसक्तक्रियानिवृत्त्यौदासीन्यमेव 'ब्राह्मणो न हन्तव्यः' इत्यादिषु प्रतिषेधार्थं मन्यामहे, अन्यत्र प्रजापतिव्रतादिभ्यः । तस्मात्पुरुषार्थानुपयोग्युपाख्यानादिभूतार्थवादविषयं आनर्थक्याभिधानं द्रष्टव्यम् ॥)

\ यदप्युक्तं— कर्तव्यविध्यनुप्रवेशमंतरेण वस्तुमात्र च्यमानं अनर्थकं स्यात् ' सद्वीपा वसुमती' इत्यादिवदिति, तत्परिहृतम् । रज्जुरियं नायं र्प इति वस्तुमात्रकथनेऽपि प्रयोजनस्य दृष्टत्वात् । ननु श्रुतब्रह्मणोऽपि यथापूर्वं संसारित्वं नात्र रज्जुस्वरूपकथनवदर्थवत्त्वमित्युक्तम् । अत्रोच्यते—नावगतब्रह्मात्मभावस्य यथापूर्वं संसारित्वं शक्यं दर्शयितुं, वेदप्रमाणजनितब्रह्मात्मभावविरोधात् । नहि शरीराद्यात्माभिमानिनो दुःखभयादिमत्त्वं दृष्टमिति, तस्यैव वेदप्रमाणजनितब्रह्मात्मावगमे तदभिमाननिवृत्तौ तदेव मिथ्याज्ञाननिमित्तं दुःखभयादिमत्त्वं भवतीति शक्यं कल्पयितुम् । नहि धनिनो गृहस्थस्य धनाभिमानिनो धनापहारनिमित्तं दुःखं द मिति, तस्यैव प्रव्रजितस्य धनाभिमानरहितस्य तदेव धनापहारनिमित्तं दुःखं भवति । नच कुंडलिनः कुंडलित्वाभिमाननिमित्तं सुखं दृष्टमिति तस्यैव कुंडलवियुक्तस्य कुंडलित्वाभिमानरहितस्य तदेव कुंडलित्वाभिमाननिमित्तं सुखं भवति । दुक्तं श्रुत्या 'अशरीरं वाव न्तं न प्रियाप्रिये स्पृशतः' इति । शरीरे पतितेऽशरीरत्वं स्यात्, न जीवत इति चेन्न, सशरीरत्वस्य मिथ्याज्ञाननिमित्तत्वात् । नहि आत्मनः शरीरात्माभिमानलक्षणं मिथ्याज्ञानं मुक्त्वा अन्यतः सशरीरत्वं शक्यं कल्पयितुम् । नित्यमशरीरत्वमकर्मनिमित्तत्वादित्यवोचाम । त्कृतधर्माधर्म-

निमित्तं शरीरत्वमिति चेन्न, शरीरसंबंधस्यासिद्धत्वाद्धर्माधर्मयोरात्मकृतत्वासिद्धेः, शरीरसं धस्य धर्माधर्मयोस्तत्कृतत्वस्य चेतरे राश्रयत्वप्रसंगात् ,अंध रं-पैरषानादित्वकल्पना, क्रियासमवायाभावाच्चात्मनः कर्तृत्वानुपपत्तेः। निधानमात्रेण राजप्रभृतीनां द कर्तृत्वमिति चेन्न,धनदानाद्युपार्जितभृत्य बंधित्वात्तेषां कर्तृत्वोपपत्तेः, न त्वात्मनो धनदानादिवच्छरीरादिभिः स्वस्वामिभाव ध-निमित्तं किंचिच्छक्यं कल्पयितुम् । मिथ्याभिमानस्तु प्रत्यक्षः संबंधहेतुः । एतेन यजमानत्वमात्मनो व्याख्यातम् । अत्राहुः—देहादिव्यी रिक्तस्यात्मन आत्मीये देहादावभिमानो गौणो न मिथ्येति चेन्न, प्रसिद्धवस्तुभेदस्य गौणत्वमुख्यत्वप्रसिद्धेः। यस्य हि प्रसिद्धो वस्तुभेदः यथा केसरादिमानाकृतिविशेषोऽन्वयव्यतिरेकाभ्यां सिंहशब्दप्रत्ययभाङ्मुख्योऽन्यः प्रसिद्धः, ततश्चान्यः पुरुषः प्रायिकैः क्रौर्यशौर्यादिभिः सिंहगुणैः संपन्नः सिद्धः, तस्य तस्मिन्पुरुषे सिंहशब्दप्रत्ययौ गौणौ भवतो नाप्रसिद्धवस्तुभेदस्य । तस्य त्वन्यत्रान्यशब्दप्रत्ययौ भ्रान्तिनिमित्तावेव भवतो न गौणौ । यथा मंदांधकारे स्थाणुरयमित्यगृह्यमाणविशेषे पुरुषशब्दप्रत्ययौ स्थाणुविषयौ, यथावा शुक्तिकायामकस्माद्रजतमिति निश्चितौ शब्दप्रत्ययौ, तद्वद्देहादिसंघातेऽहमिति निरुपचारेण शब्दप्रत्ययावात्मानात्माविवेकेनोत्पद्यमानौ कथं गौणौ शक्यौ वदितुम् । आत्मानात्मविवेकिनामपि पंडितजनामजाविपालानामिवाविविक्तौ शब्दप्रत्ययौ भवतः । तस्माद्देहादिव्यातिरिक्तात्मास्तित्ववादिनां देहादावहंप्रत्ययो मिथ्यैव न गौणः । तस्मान्मिथ्याप्रत्ययनिमित्तत्वात्सशरीरत्वस्य, द्धं जीवतोऽपि विदुषोऽशरीरत्वम् । तथाच ब्रह्मविद्विषया श्रुतिः—'तद्यथाहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं ते, अथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव' इति । 'सचक्षुरचक्षुरिव कर्णोऽकर्ण इव सवागवागिव समना अमना इव सप्राणोऽप्राण इव' इति च । स्मृतिरपि च—"स्थितप्रज्ञस्य का भाषा" इत्याद्या स्थितप्रज्ञलक्षणान्याच णा विदुषः सर्वप्र त्य-बंधं दर्शयति । तस्मान्नावगतब्रह्मात्मभावस्य यथापूर्वं सारित्वम् । यस्य तु यथापूर्वं सारित्वं नासाववगतब्रह्मात्मभाव इत्यनवद्य ॥

यत्पुनरुक्तं श्रवणात्पराचीनयोर्मनननिदिध्यासनयोर्दर्शनाद्विधिशेषत्वं ब्रह्मणो, न र रूपपर्यवसायित्वमिति । न । श्रवणवदवगत्यर्थत्वान्मनननि-

दिध्यासनयोः । यदि ह्यवगतं ब्रह्मान्यत्र विनियुज्येत भवेत्तदा विधिशेषत्वम्। ननु तदस्ति, मनननिदिध्यासनयोरपि श्रवणवदवगत्यर्थत्वात् । तस्मान्न प्रतिपत्तिविधिविषयतया शास्त्रप्रमाणकत्वं ब्रह्मणः संभवतीत्यतः स्वतंत्रमेव ब्रह्म शास्त्रप्रमाणकं वेदान्तवाक्यसमन्वयादिति सिद्धम् । एवंच सति 'अथातो ब्रह्मजिज्ञासा' इति तद्विषयः पृथक्शास्त्रारंभ उपपद्यते । प्रतिपत्तिविधिपरत्वे हि 'अथातो धर्मजिज्ञासा' इत्येवारब्धत्वान्न पृथक्शास्त्रमारभ्येत । आरभ्यमाणं चैवमारभ्येत—"अथातः परिशिष्टधर्मजिज्ञासेति", "अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा" इतिवत् । ब्रह्मात्मैक्यावगतिस्त्वप्रतिज्ञातेति तदर्थो युक्तः शास्त्रारंभः 'अथातो ब्रह्मजिज्ञासा' इति । तस्मादहं ब्रह्मास्मीत्येतदवसाना एव सर्वे विधयः सर्वाणि चेतराणि प्रमाणानि । नह्यहेयानुपादेयाद्वैतात्मावगतौ सत्यां निर्विषयाण्यप्रमातृकाणि च प्रमाणानि भवितुमर्हन्तीति। अपिचाहुः— "गौणमिथ्यात्मनोऽसत्त्वे पुत्रदेहादिबाधनात् । सद्ब्रह्मात्माहमित्येवं बोधे कार्यं कथं भवेत् ॥ अन्वेष्टव्यात्मविज्ञानात्प्राक्प्रमातृत्वमात्मनः। अन्विष्टः स्यात्प्रमातैव पाप्मदोषादिवर्जितः ॥ देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन कल्पितः । लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात्" इति ॥४॥

इति चतुःसूत्री समाप्ता ।

### ५ ईक्षत्यधिकरण । सू० ५-११ ।

एवं तावद्वेदान्तवाक्यानां ब्रह्मात्मावगतिप्रयोजनानां ब्रह्मात्मनि तात्पर्येण समन्वितानामंतरेणापि कार्यानुप्रवेशं ब्रह्मणि पर्यवसानमुक्तम् । ब्रह्म च सर्वज्ञं सर्वशक्ति जगदुत्पत्तिस्थितिलयकारणमित्युक्तम् । सांख्यादयस्तु परिनिष्ठितं वस्तु प्रमाणांतरगम्यमेवेति मन्यमानाः प्रधानादीनि कारणान्तराण्यनुमिमानास्तत्परतयैव वेदान्तवाक्यानि योजयन्ति । सर्वेष्वेव वेदान्तवाक्येषु सृष्टिविषयेष्वनुमानेनैव कार्येण कारणं लिलक्षयिषितम् । प्रधानपुरुषसंयोगा नित्यानुमेया इति सांख्या मन्यन्ते । काणादास्त्वेतेभ्य एव वाक्येभ्य ईश्वरं निमित्तकारणमनुमिमते, अणूंश्च समवायिकारणम् । एवमन्येऽपि तार्किका वाक्याभासयुक्त्याभासावष्टम्भाः पूर्वपक्षवादिन इहोत्तिष्ठन्ते । तत्र पदवाक्यप्रमाणज्ञेनाचार्येण वेदान्तवाक्यानां ब्रह्मावगतिपरत्वदर्शनाय वाक्या-

स्मात्, वक्तुरात्मोपदेशात् । वक्ता हींद्रो नाम कश्चिद्विग्रहवान्देवताविशेषः स्वमात्मानं प्रतर्दनायाचचक्षे— 'मामेव विजानीहि' इत्युपक्रम्य 'प्राणोऽस्मि प्रज्ञात्मा' इत्यहंकारवादेन । स एष वक्तुरात्मत्वेनोपदिश्यमानः प्राणः कथं ब्रह्म स्यात् । नहि ब्रह्मणो वक्तृत्वं संभवति 'अवागमनाः' इत्यादिश्रुतिभ्यः । तथा विग्रहसंबंधिभिरेव ब्रह्मण्यसंभवद्भिर्धर्मैरिंद्र आत्मानं तुष्टाव— 'त्रिशीर्षाणं त्वाष्ट्रमहनमरुन्मुखान्यतीन्शालावृकेभ्यः प्रायच्छम्' इत्येवमादिभिः । प्राणत्वं चेंद्रस्य बलवत्त्वादुपपद्यते । 'प्राणो वै बलम्' इति हि विज्ञायते । बलस्य चेंद्रो देवता प्रसिद्धा । या च काचि द्बलकृतिरिंद्रकर्मैव तादिति हि वदन्ति । प्रज्ञात्मत्वमप्यप्रतिहतज्ञानत्वाद्देवतात्मनः संभवति । अप्रतिहतज्ञाना देवता इति हि वदन्ति । निश्चिते चैवं देवतात्मोपदेशे हिततमत्वादिवचनानि यथासंभवं तद्विषयाण्येव योजयितव्यानि । तस्माद्वक्तुरिंद्रस्यात्मोपदेशान्न प्राणो ब्रह्मेत्याक्षिप्य प्रतिसमाधीयते— 'अध्यात्मसंबंधभूमा -स्मिन्' इति । अध्यात्मसंबंधः प्रत्यगात्मसंबंधस्तस्य भूमा बाहुल्यमस्मिन्नध्याय उपलभ्यते । 'यावद्ध्यस्मिञ् शरीरे प्राणो वसति तावदायुः' इति प्राणस्यैव प्रज्ञात्मनः प्रत्यग्भूतस्यायुष्प्रदानोपसंहारयोः स्वातंत्र्यं दर्शयति न देवताविशेषस्य पराचीनस्य । तथास्तित्वे च प्राणानां निःश्रेयसमित्यध्यात्ममेवेंद्रियाश्रयं प्राणं दर्शयति । तथा "प्राण एवं प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति" इति, 'न वाचं विजिज्ञासीत वक्तारं विद्यात्' इति चोपक्रम्य 'तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः स एष प्राण एव प्रज्ञात्मानंदोऽजरोऽमृतः' इति विषयेंद्रियव्यवहारानाभिभूतं प्रत्यगात्मानमेवोपसंहरति । 'म आत्मेति विद्यात्' इति चोपसंहारः प्रत्यगात्मपरिग्रहे साधुर्न पराचीनपरिग्रहे । 'अयमात्मा ब्रह्म सर्वानुभूः' इति च श्रुत्यंतरम् । तस्मादध्यात्मसंबंधबाहुल्याद्ब्रह्मोपदेश एवायं न देवतात्मोपदे ः ॥२९॥

कथं तर्हि वक्तुरात्मोपदेशः—

**या तूपदेशो मदेवव ॥३०॥**

इंद्रो नाम देवतात्मा स्वमात्मानं परमात्मत्वेनाहमेव परं ब्रह्मेत्यार्षेण दर्शनेन यथाशास्त्रं पश्यन्नुपदिशति स्म— 'मामेव विजानीहि' इति । यथा

'तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्च' इति तद्वत् । 'तद्यो यो देवानां प्रत्यबुध्यत एव तदभवत्' इति श्रुतेः । यत्पुनरुक्तं 'मामेव विजानीहि' इत्युक्त्वा विग्रहधर्मैरिंद्र आत्मानं तुष्टाव त्वाष्ट्रवधादिभिरिति, तत्परिहर्तव्यम् । अत्रोच्यते— न त्वाष्ट्रवधादीनां विज्ञेयेंद्रस्तुत्यर्थत्वेनोपन्यासो यस्मादेवंकर्माहं तस्मान्मां विजानीहीति । कथं तर्हि । विज्ञानस्तुत्यर्थत्वेन । यत्कारणं त्वाष्ट्रवधादीनि साहसान्युपन्यस्य परेण विज्ञानस्तुतिमनुसंदधाति— 'तस्य मे तत्र लोम च न मीयते स यो मां वेद न ह वै तस्य केन च कर्मणा लोको मीयते' इत्यादिना । एतदुक्तं भवति— यस्मादीदृशान्यपि क्रूराणि कर्माणि कृतवतो मम ब्रह्मभूतस्य लो ापि न हिंस्यते, स योऽन्योऽपि मां वेद न तस्य केनचिदपि कर्मणा लोको हिंस्य इति । विज्ञेयं तु ब्रह्मैव 'प्राणोऽस्मि प्रज्ञात्मा' इति वक्ष्यमाणम् । तस्माद्ब्रह्मवाक्यमेतत् ॥३०॥

**जीवमुख्यप्राणलिंगान्नेति चे ोपासात्रैविध्यादाश्रितत्वादिह द्योगात् ॥३१॥**

यद्यप्यध्यात्मसंबंधभूमदर्शनान्न पराची स्य देवतात्मन उपदेशः, तथापि न ब्रह्मवाक्यं भवितुमर्हति । कुतः, जीवलिंगान्मुख्यप्राणलिंगाच्च । जीवस्य तावदस्मिन्वाक्ये विस्पष्टं लिंगमुपलभ्यते 'न वाचं विजिज्ञासीत वक्तारं विद्यात्' इत्यादि । अत्र हि वागादिभिः करणैर्व्यापृतस्य कार्यकरणाध्यक्षस्य जीवस्य विज्ञेयत्वमभिधीयते । तथा मुख्यप्राणलिंगमपि— 'अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति' इति । शरीरधारणं च मुख्यप्राणस्य धर्मः, प्राण वादे वागादीन्प्राणान्प्रकृत्य 'तान्वरि : प्राण उवाच मा मोहमापद्यथाहमेवैतत्पंचधात्मानं प्रविभज्यैतद्बाणमव भ्य विधारयामि' इति श्रवणात् । ये तु 'इमं शरीरं परिगृह्य' इति पठन्ति तेषामिमं जीवमिंद्रियग्रामं वा परिगृह्य शरीरमुत्थापयतीति व्याख्येयम् । प्रज्ञात्मत्वमपि जीवे तावच्चेतनत्वादुपपन्नम् । मुख्येऽपि प्राणे प्रज्ञासाधनप्राणांतराश्रयत्वादुपपन्नमेव । जीवमुख्यप्राणपरिग्रहे च प्राणप्रज्ञात्मनोः हवृत्तित्वेनाभेदनिर्देशः स्वरूपेण च भेदनिर्देश इत्युभयथापि निर्देश उपपद्यते— 'यो वै प्राणः सा प्रज्ञा या वै प्रज्ञा स प्राणः ह ह्येतावास्मिञ् शरीरे वसतः सहो-

त्क्रामतः' इति । ब्रह्मपरिग्रहे तु किं कस्माद्भिद्येत । तस्मादिह जीवमुख्यप्राणयोरन्यतर उभौ वा प्रतीयेयातां न ब्रह्मेति चेत्, नैतदेवं, उपासात्रैविध्यात् । एवं सति त्रिविधमुपासनं प्रसज्येत— जीवोपासनं मुख्यप्राणोपासनं ब्रह्मोपासनं चेति । नचैतदेकस्मिन्वाक्येऽभ्युपगंतुं युक्तम् । उपक्रमोपसंहाराभ्यां हि वाक्यैकत्वमवगम्यते । 'मामेव विजानीहि' इत्युपक्रम्य 'प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्व' इत्युक्त्वान्ते 'स एष प्राण एव प्रज्ञात्मानंदोऽजरोऽमृतः' इत्येकरूपावुपक्रमोपसंहारौ दृश्येते । तत्रार्थैकत्वं युक्तमाश्रयितुम् । नच ब्रह्मलिंगमन्यपरत्वेन परिणेतुं शक्यम् । दशानां भूतमात्राणां प्रज्ञामात्राणां च ब्रह्मणोऽन्यत्रार्पणानुपपत्तेः । आश्रितत्वाच्चान्यत्रापि ब्रह्मलिंगवशात्प्राणशब्दस्य ब्रह्मणि वृत्तेः, इहापि च हिततमोपन्यासादिब्रह्मलिंगयोगाद्ब्रह्मोपदेश एवायमिति गम्यते । यत्तु मुख्यप्राणलिंगं दर्शितम्— 'इदं शरीरं परिगृह्योत्थापयति' इति, तदसत् । प्राणव्यापारस्यापि परमात्मायत्तत्वात्परमात्मन्युपचरितुं शक्यत्वात् । 'न प्राणेन नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ' इति श्रुतेः। यदपि 'न वाचं विजिज्ञासीत वक्तारं विद्यात्' इत्यादि जीवलिंगं दर्शितं तदपि न ब्रह्मपक्षं निवारयति । नहि जीवो नामात्यंतभिन्नो ब्रह्मणः, 'तत्त्वमसि', 'अहं ब्रह्मास्मि' इत्यादिश्रुतिभ्यः । बुद्ध्याद्युपाधिकृतं तु विशेषमाश्रित्य ब्रह्मैव सञ्जीवः कर्ता भोक्ता चेत्युच्यते । तस्योपाधिकृतविशेषपरित्यागेन स्वरूपं ब्रह्म दर्शयितुं 'न वाचं विजिज्ञासीत वक्तारं विद्यात्' इत्यादिना प्रत्यगात्माभिमुखीकरणार्थ उपदेशो न विरुध्यते । 'यद्वाचानभ्युदितं येन वागभ्युद्यते । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥' इत्यादि च श्रुत्यंतरं वचनादिक्रियाव्यापृतस्यैवात्मनो ब्रह्मत्वं दर्शयति । यत्पुनरेतदुक्तम्— 'सह ह्येतावस्मिञ् शरीरे वसतः सहोत्क्रामतः' इति प्राणप्रज्ञात्मनोर्भेददर्शनं ब्रह्मवादे नोपपद्यत इति । नैष दोषः । ज्ञानक्रियाशक्तिद्वयाश्रययोर्बुद्धिप्राणयोः प्रत्यगात्मोपाधिभूतयोर्भेदनिर्देशोपपत्तेः उपाधिद्वयोपहितस्य तु प्रत्यगात्मनः स्वरूपेणाभेद इत्यतः प्राण एव प्रज्ञात्मेत्येकीकरणमविरुद्धम् ॥

अथवा 'नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्' इत्यस्यायमन्योऽर्थः— न ब्रह्मवाक्येऽपि जीवमुख्यप्राणलिंगं विरुध्यते । कथम्, उपासा-

त्रैविध्यात् । त्रिविधमिह ब्रह्मोपासनं विवक्षितं प्राण र्मेण प्रज्ञा र्मेण स्व - र्मेण च । तत्र 'आयुरमृतमुपास्स्वायुः प्राणः' इति, 'इदं रीरं परिगृह्योत्थापयति' इति, 'तस्मादेतदेवोक्थमुपासीत' इति च प्राणधर्मः । 'अथ यथास्यै प्रज्ञायै सर्वाणि भूतान्येकीभवन्ति तद्व्याख्यास्यामः' इत्युपक्रम्य 'वागेवास्या एकमंगमदूदुहत्तस्यै नाम परस्तात्प्रतिविहि । भूतमात्रा प्रज्ञया वाचं मारुह्य वाचा र्वाणि नामान्याप्नोति' इत्यादिः प्रज्ञाधर्मः । 'ता वा एता दशैव भूतमात्रा अधिप्रज्ञं दश प्रज्ञामात्रा अधिभूतम् । यद्धि भूतमात्रा न स्युर्न प्रज्ञामात्राः स्युः । यद्धि प्रज्ञामात्रा न स्युर्न भूतमात्राः स्युः । नह्यन्यतरतो रूपं किंचन सिध्येत् । नो एतन्नाना । 'तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः स एष प्राण एव प्रज्ञात्मा' इत्यादिर्ब्रह्मधर्मः । तस्माद्ब्रह्मण एवैतदुपाधिद्वयधर्मेण स्वधर्मेण चैकमुपासनं त्रिविधं विवक्षितम् । अन्यत्रापि 'मनोमयः प्राणशरीरः' इत्यादावुपाधिधर्मेण ब्रह्मण उपासनमाश्रितम् । इहापि तद्युज्यते वाक्यस्योपक्रमोपसंहाराभ्यां एकार्थत्वावगमात् प्राणप्रज्ञाब्रह्मलिंगावगमाच्च । तस्माद्ब्रह्मवाक्यमेतादिति सिद्धम् ॥३१॥ इति श्रीशंकरभगवत्पादकृतौ शारीरकमीमांसाभाष्ये प्रथमाध्यायस्य प्रथमः पादः॥

---

## थमाध्याये द्वितीयः पादः ।



### १ सर्वत्र सिद्ध्यधिकरणम् । सू० । १–८ ।

प्रथमे पादे 'जन्माद्यस्य यतः' इत्याकाशादेः समस्तस्य जगतो जन्मादिकारणं ब्रह्मेत्युक्त । तस्य समस्तजगत्कारणस्य ब्रह्मणो व्यापित्वं नित्यत्वं सर्वज्ञत्वं सर्वशक्तित्वं र्वा त्वमित्येवंजातीयका धर्मा उक्ता एव भवन्ति । अर्थान्तरप्रसिद्धानां च केषांचिच्छब्दानां ब्रह्मविषयत्वहेतुप्रतिपादनेन कानिचिद्वाक्यानि स्पष्टब्रह्मलिंगानि संदिह्यमानानि ब्रह्मपरतया निर्णीतानि । पुनरप्यन्यानि क्यान्यस्पष्टब्रह्मलिंगानि संदिह्यन्ते—किं परं ब्रह्म प्रतिपादयन्त्याहोस्विदर्थान रं किंचिदिति । तन्निर्णयाय द्वितीयतृतीयौ पादावारभ्येते—

र्व सिद्धोपदेशात् ॥१॥

इदमाम्नायते— ' र्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासी । अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत', 'मनोमयः प्राणशरीरो भारूपः' इत्यादि । त्र यः— किमिह मनोमयत्वादिभिर्धर्मैः शारीर आत्मोपास्यत्वेनोपदिश्यत आहोस्वित्परं ब्रह्मेति । किं तावत्प्राप्तम् । शारीर इति । कुतः ? स्य हि कार्यकरणाधिपतेः प्रसिद्धो मनआदिभिः बंधो न परस्य ब्रह्मणः, 'अप्राणो ह्यमनाः शुभ्रः' इत्यादिश्रुतिभ्यः । ननु ' र्वं खल्विदं ब्रह्म' इति स्वशब्देनैव ब्रह्मोपात्तं, कथमिह शारीर आत्मोपास्य आशंक्यते ? नैष दोषः । नेदं वाक्यं ब्रह्मोपासनाविधिपरं, किं तर्हि, शमविधिपरम् । यत्कारणं ' र्वं खल्विदं ब्रह्म तज्जलानिति ान्त उपासीत' इत्याह । एतदुक्तं भवति— यस्मात्सर्वमिदं विकारजातं ब्रह्मैव, तज्जत्वात्तल्लत्वात्तदनत्वाच्च । नच सर्वस्यै ात्मत्वे रागादयः भवन्ति । तस्माच्छान्त उपासीतेति । नच शमविधिपरत्वे सत्यनेन वाक्येन ब्रह्मोपासनं नियंतुं शक्यते । उपा नं तु ' क्रतुं कुर्वीत' इत्यनेन विधीयते । क्रतुः कल्पो ध्यानमित्यर्थः । स्य च विषयत्वेन श्रूयते— 'मनोमयः प्राणशरीरः' इति जीवलिंगम् । अतो मो जीवविषयमेतदुपा नमिति । 'सर्वकर्मा सर्वकामः' इत्याद्यपि श्रूयमाणं पर्यायेण जीवविषयमुपपद्यते । 'ए म आत्मान्तर्हृदयेऽणीयान्व्रीहेर्वा यवाद्वा' इति च हृदयायतनत्वमणीयस्त्वं चाराग्रमात्रस्य जीवस्यावकल्पते नापरिच्छिन्नस्य ब्रह्मणः। ननु 'ज्यायान्पृथिव्याः' इत्याद्यपि न परिच्छिन्नेऽवकल्पत इति । अत्र ब्रूमः— न तावदणीयस्त्वं ज्यायस्त्वं चोभयमेकस्मिन् ाश्रयितुं शक्यं, विरोधात् । अन्यतराश्रयणे च प्रथमश्रुतत्वादणीयस्त्वं युक्तमाश्रयि , ज्यायस्त्वं तु -भावापेक्षया भविष्यतीति । निश्चिते च जीवविषयत्वे यदंते ब्र कीर्तनं 'एतद्ब्र ' इति, तदपि प्रकृतपरामर्शार्थत्वाज्जीवविषयमेव । तस्मान्मनोमयत्वादिभिर्धर्मैर्जीव उपास्य इत्येवं प्राप्ते ब्रूमः— परमेव इह ोमयत्वादिभिर्धर्मैरुप यम् । कुतः ? सर्वत्र प्रसिद्धोपदेशात् । यत्सर्वेषु वेदान्तेषु सि ब्रह्मशब्दस्यालंबनं त्कारणं, इह च 'सर्वं खल्विदं ' इति वाक्योपक्रमे श्रु , तदेव मनोमयत्वादिधर्मैर्विशिष्टमुपादिश्यत इति युक्तम् ।

एवंच ति प्रकृतहानाप्रकृतप्रक्रिये न भविष्य : । ननु वाक्योपक्रमे शमविधिविवक्षया ब्रह्म निर्दिष्टं न स्ववि क्षयेत्युक्तम् । अत्रोच्यते—यद्यपि शमविधिविवक्षया ब्रह्म निर्दिष्टं तथापि मनोमयत्वादिषूपदिश्यमानेषु तदेव ब्रह्म निहितं भवति । जीवस्तु न संनिहितो नच स्वशब्देनोपात्त इति वैषम्यम् ॥१॥

## विवक्षित णोपपत्तेश्च ॥२॥

वक्तुमिष्टा विवक्षिताः । यद्यप्यपौरुषेये वेदे वक्तुरभावान्नेच्छार्थः संभवति, तथाप्युपादानेन फलेनोपचर्यते । लोके हि यच्छब्दाभिहितमुपादेयं भवति तद्विवक्षितमित्युच्यते, यदनुपादेयं तदविवाक्षि मिति । तद्वद्वेदेऽप्युपादेयत्वेनाभिहितं विवक्षि भवति, इतरदविवाक्षितम् । उपादानानुपादाने तु वेदवाक्यतात्पर्यातात्पर्याभ्यामवगम्येते । तदिह ये विवक्षिता गु । उपानायासुपादेयत्वेनोपदिष्टाः सत्यसंकल्पप्रभृतयस्ते परास्मिन्ब्रह्मण्युपपद्यन्ते । सत्यसंकल्पत्वं हि सृष्टिस्थितिसंहारेष्वप्रतिबद्धशक्तित्वात्परमात्मन एवावकल्पते । परमात्मगुणत्वेन च 'य आत्मापहतपाप्मा' इत्यत्र 'सत्यकामः सत्यसंकल्प' इति श्रुतम् । 'आकाशात्मा' इति च । आकाशवदात्मास्येत्यर्थः । सर्वगतत्वादिभिर्धर्मैः संभवत्याकाशेन साम्यं ब्रह्मणः । 'ज्यायान्पृथिव्याः' इत्यादिना चैतदेव दर्शयति । यदाप्याकाश आत्मा यस्येति व्याख्यायते, तदापि संभवति सर्वजगत्कारणस्य सर्वात्मनो ब्रह्मण आकाशात्मत्वम् । अतएव 'सर्वकर्मा' इत्यादि । एवमिहोपास्यतया विवक्षिता गुणा ब्रह्मण्युपपद्यन्ते । यत्तूक्तं 'मनोमयः प्राणशरीरः' इति जीवलिंगं न तद्ब्रह्मण्युपपद्य इति, तदपि ब्रह्मण्युपपद्यत इति ब्रूमः । सर्वात्मत्वाद्धि ब्रह्मणो जीवसंबंधीनि मनोमयत्वादीनि ब्रह्मसंबंधीनि भवन्ति । तथाच ब्रह्मविषये श्रुतिस्मृती भवतः— 'त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी । त्वं जीर्णो दंडेन वंचसि त्वं जातो भवसि विश्वतोमुखः' इति । "सर्वतःपाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् । सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति" इति च । 'अप्राणो ह्यमनाः शुभ्रः' इति श्रुतिः शुद्धब्रह्मविषया, इयं तु 'मनोमयः प्राणशरीरः' इति सगुणब्रह्मविषयेति विशेषः । अतो विवक्षितगुणोपपत्तेः परमेव ब्रह्मेहोपास्यत्वेनोपदिष्टमिति गम्यते ॥२॥

अनुपपत्तेस्तु  ारीरः ॥३॥

पूर्वेण सूत्रेण ब्रह्मणि विवक्षितानां गुणानामुपपत्तिरुक्ता । अनेन तु शारीरे तेषामनुपपत्तिरुच्यते । तुशब्दोऽवधारणार्थः । ब्रह्मैवोक्तेन न्यायेन मनोमयत्वादिगुणं, नतु शारीरो जीवो मनोमयत्वादिगुणः । यत्कारणं 'सत्यसंकल्पः, आकाशात्मा, अवाकी, अनादरः, ज्यायान्पृथिव्या' इति चैवंजातीयका गुणा न शारीर आंजस्येनोपपद्यन्ते । शारीर इति शरीरे भव इत्यर्थः । नन्वीश्वरोऽपि शरीरे भवति । सत्यम् । शरीरे भवति नतु शरीर एव भवति । 'ज्यायान्पृथिव्या ज्यायानंतरिक्षात्', 'आकाशवत् र्वगतश्च नित्यः' इति च व्यापित्वश्रवणात् । जीवस्तु शरीर एव भवति, तस्य भोगाधिष्ठानाच्छरीरादन्यत्र वृत्त्यभावात् ॥३॥

कर्मकर्तृव्यपदेशाच्च ॥४॥

इतश्च न शारीरो मनोमयत्वादिगुणः, यस्मात्कर्मकर्तृव्यपदेशो भवति 'एतमितः प्रेत्याभिसंभवितास्मि' इति । एतमिति प्रकृतं मनोमयत्वादिगुणमुपास्यमात्मानं कर्मत्वेन प्राप्यत्वेन व्यपदिशति । अभिसंभवितास्मीति शारीरमुपा कं कर्तृत्वेन प्रापकत्वेन । अभि भवितास्मीति प्राप्तास्मीत्यर्थः । नच त्यां गतावेकस्य कर्मकर्तृव्यपदेशो युक्तः । तथोपास्योपासकभावोऽपि भेदाधिष्ठान एव । तस्मादपि न शारीरो मनोमयत्वादिविशिष्टः ॥४॥

शब्दविशेषा ॥५॥

इतश्च शारीरादन्यो मनोमयत्वादिगुणः, यस्माच्छब्दविशेषो भवति समानप्रकरणे श्रुत्यंतरे— "यथा व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतंडुलो वैवमयमंतरात्मन्पुरुषो हिरण्मयः" इति । शारीरस्यात्मनो यः शब्दोऽभिधायकः सप्तम्यंतोऽन्तरात्मन्निति । तस्माद्विशिष्टोऽन्यः प्रथमान्तः पुरुषशब्दो मनोमयत्वादिविशिष्टस्यात्मनोऽभिधायकः । तस्मात्तयोर्भेदोऽधिगम्यते ॥

स्मृतेश्च ॥६॥

स्मृतिश्च शारीरपरमात्मनोर्भेदं दर्शयति— "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन्सर्वभूतानि यंत्रारूढानि मायया" इत्याद्या । अत्राह— कः पुनरयं शारीरो नाम परमात्मनोऽन्यः, यः प्रतिषिध्यते 'अनुपपत्तेस्तु न शारीरः' इत्यादिना । श्रुतिस्तु— 'नान्योऽतोऽस्ति द्रष्टा ना-

न्योऽतोऽस्ति गोता' इत्येवंजातीयका परमात्मनोऽन्यमात्मानं वारयति । तथा स्मृतिरपि— "क्षेत्रज्ञं चापि मां विद्धि र्वक्षेत्रेषु भारत" इत्येवंजातीयकेति ॥ अत्रोच्यते— सत्यमेवैतत् । पर एवात्मा देहेंद्रियमनोबुद्ध्युपाधिभिः परिच्छिद्यमानो बालैः शारीर इत्युपचर्यते । यथा घटकरकाद्युपाधि- ादपरिच्छिन्नमपि नभः परिच्छिन्नवदवभासते, तद्व् । तदपेक्षया च कर्मकर्तृत्वादिभेदव्यवहारो न विरुध्यते प्राक् 'तत्त्वमसि' इत्यात्मैकत्वोपदेशग्रहणात् । गृहीते त्वात्मैकत्वे बंधमोक्षादि र्वव्यवहारपरि मासिरेव स्यात् ॥

**अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्‌ त्वादेवं व्योमवच्च॥ ॥**

अर्भकमल्पमो ो नीडं, 'एष म आत्मान्तर्हृदये' इति परिच्छि ाय- तनत्वात्, स्वशब्देन च 'अणीयान्व्रीहेर्वा यवाद्वा' इत्यणीयस्त्वव्यपदेशात्, शारीर एवाराग्रमात्रो जीव इहोपदिश्यते, न सर्वगतः परमात्मेति यदुक्तं तत्परिहर्तव्यम् । अत्रोच्यते— नायं दोषः । न तावत्परिच्छिन्नदेशस्य सर्वगतत्वव्यपदेशः थमप्युपपद्यते । गतस्य तु सर्वदेशेषु विद्यमानत्वात्परिच्छिन्नदेशव्यपदेशोऽपि याचिदपेक्षया संभवति । यथा स स्तव ुधाधिपतिरपि हि न्नयोध्याधिपतिरिति व्यपदिश्यते कया पुनरपेक्षया सर्वगतः - न्नीश्वरोऽर्भकौका अणीयांश्च व्यपदिश्यत इति । निचाय्यत्वादेवमिति ब्रूमः । एवमणीयस्त्वादिगु गणोपेत ईश्वरस्तत्र हृदयपुंडरीके निचाय्यो द्रष्टव्य उपदिश्यते । य । शालग्रामे रिः । तत्रास्य बुद्धिविज्ञानं ग्राहकम् । र्वगतोऽपीश्वरस्तत्रोपास्यमानः प्रसीदति । व्योमवच्चैतत् द्रष्टव्यम् । यथा र्वगत पि द्योम सूचीपाशाद्यपेक्षयार्भकौको णीयश्चेति व्यपदिश्यते, एवं पि । तदेवं निचाय्यत्वापेक्षं ो र्भकौ स्त्वमणीयस्त्वं च न पारमार्थिकम् । तत्र यदाशंक्यते, हृदयातनत्वाद्ब्रह्म ो हृदयायतनानां तिशरीरं भिन्न ाद्भिन्नायतनानां च शुकादीनामनेकत्वसावयवत्वानित्यत्वादिदोषदर्शनाद्ब्रह्मणोऽपि तत्प्रसंग इति, तदपि परिहृतं भवति ॥ ॥

**भोगप्राप्तिरिति चेन्न वैशेष्यात् ॥८॥**

व्योमवत्सर्वगत यब्रह्मणः सर्वप्राणिहृद धात्, चिद्रूपतया च ा- रीरादविशि ात्, खदुःखादिसंभोगोऽप्यविशिष्टः प्रसज्येत। एकत्वाच्च। नहि परस्मादात्मनोऽन्यः कश्चिदात्मा संसारी विद्यते, 'नान्योऽ ोऽस्ति वि-

ज्ञाता' इत्यादिश्रुतिभ्यः । तस्मात्परस्यैव ब्रह्मणः संसारसंभोगप्राप्तिरिति चेत्,
। वैशेष्यात् । न ावत्सर्वप्राणिहृदयसंबंधात् चिद्रूपतया च शारीरवद्ब्र-
णः संभोगप्र ंगः, वैशेष्यात् । विशेषो हि भवति शारीरपरमेश्वरयोः ।
एकः कर्ता भोक्ता धर्माधर्मसाधनः सुखदुःखादिमांश्च । एकस्तद्विपरीतोऽ-
पहतपाप्मत्वादिगुणः । एतस्मादनयोर्विशेषादेकस्य भोगो नेतरस्य । यदि
च ंनिधानमात्रेण वस्तुशक्तिमनाश्रित्य कार्य ंबंधोऽभ्युपगम्येत, आकाशा-
दीनामपि दाहादिप्रसंगः । वंगतानेकात्मवादिनामपि मावेतौ चो-
द्यपरिहारौ । यदप्येकत्वाद्ब्रह्मणः आत्मान्तराभावाच्छारीरस्य भोगेन
ब्रह्मणो भोगप्रसं इति, अत्र वदामः इदं तावद्देवानांप्रियः
प्रष्टव्यः । कथमयं त्वयात्मान्तराभावोऽध्यवसित इति । 'तत्वमसि'
'अहं ब्रह्मास्मि' 'नान्योऽतोऽस्ति विज्ञाता' इत्यादिशास्त्रेभ्य इति चेत्, य-
थाशास्त्रं तर्हि शास्त्रीयोऽर्थः प्रतिपत्तव्यो, न तत्रार्धजरतीयं लभ्यम् । शास्त्रं
च 'तत्त्वमसि' इत्यपहतपाप्मत्वादिविशेषणं ब्रह्म शारीरस्यात्मत्वेनोपदिश-
च्छारीरस्यैव तावदुपभोक्तृत्वं वारयति । कुतस्तदुपभोगेन ब्रह्मण उपभोग-
प्रसंगः । अथागृहीतं शारीरस्य ब्रह्मणैकत्वं दा मिथ्याज्ञाननिमित्तः शारीर-
स्योपभोगः, न तेन परमार्थरूपस्य ब्रह्मणः संस्पर्शः । नहि बालैः मलि-
नतादिभिर्व्योम्नि विकल्प्यमाने तलमलिनतादिविशिष्टमेव परमार्थतो व्योम
भवति । तदाह— न वैशेष्यादिति । नैकत्वेऽपि शारीरस्योपभोगेन ब्रह्मण
उपभोगप्रसंगः, वैशेष्यात् । विशेषो हि भवति मिथ्याज्ञानसम्यग्ज्ञानयोः ।
मिथ्याज्ञानकल्पित उपभोगः, सम्यग्ज्ञानदृष्टमेकत्वम् । नच मिथ्याज्ञान
ल्पितेनोपभोगेन म्यग्ज्ञानदृ वस्तु स्पृश्यते । तस्मान्नोपभोगगंधोऽपि
शक्य ईश्वरस्य कल्पयितुम् ॥८॥

२ त्त्रधिकरणम् । ू० ९–१० ।

**अत्ता चराचरग्रहणात् ॥९॥**

कठवल्लीषु प ते— 'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः ।
मृत्युर्यस्योपसेचनं क इत्था वेद यत्र ः' इति । अत्र कश्चिदोदनोपसेचन-
सूचितोऽत्ता तीयते । त्र किमग्निरत्ता स्यात्, उत जीवः, अथवा परमा-
त्मेति संशयः । विशेषानवधारणात् । त्रयाणां चाग्निजीवपरमात्मनामस्मिन्ग्रंथे

श्चोपन्यासोपलब्धेः। किं तावत्प्राप्तम्। अग्निरत्तेति। कु :, 'अग्निरन्नादः' इति श्रुतिप्रसिद्धिभ्या । जीवो वात्ता स्यात्, 'तयोरन्यः पिप्प स्वाद्वत्ति' इति दर्शनात्। न परमात्मा, 'अनश्नन्नन्योऽभिचाकशीति' इति दर्शनादित्येवं प्राप्ते ब्रूमः— अत्तात्र परमात्मा भवितुमर्हति। कुतः, चराचरग्रहणात्। चराचरं हि स्थावरजंगमं मृत्यूपसेचनमिहाद्यत्वेन प्रतीयते, तादृशस्य चाद्यस्य न परमात्मनो न्यः कार्त्स्न्येनात्ता संभवति। परमात्मा तु विकारजातं संहरन्सर्वमत्तीत्युपपद्यते। नन्विह चराचरग्रहणं नोपलभ्यते, कथं सिद्धवच्चराचरग्रहणं हेतुत्वेनोपादीयते। नैष दोषः। मृत्यूपसेचनत्वेन इहाद्यत्वेन सर्वस्य प्राणिनिकायस्य प्रतीयमानत्वात्, ब्रह्मक्षत्रयो प्राधान्यात्प्रदर्शनार्थत्वोपपत्तेः। यत्तु परमात्मनोऽपि त्तृत्वं भवति, 'अनश्नन्नन्योऽभिचाकशीति' इति दर्शनादिति। अत्रोच्यते— कर्मफलभोगस्य प्रतिषे कमेतद्दर्शनं, तस्य संनिहितत्वात्। न विकारसंहारस्य प्र षेधकं, सर्ववेदान्तेषु सृष्टिस्थितिसंहारकारणत्वेन ब्रह्मणः प्रसिद्धत्वात्। तस्मात्परमात्मैवेहात्ता भवितुमर्हति॥

प्रकरणाच्च ॥१०॥

इतश्च परमात्मैवेहात्ता भवितुमर्हति, यत्कारणं प्रकरणमिदं परमात्मनः, ' जायते म्रियते वा विपश्चित्' इत्यादि। प्रकृतग्रहणं च न्याय्यम्। 'क इत्था वेद यत्र :' इति च दुर्विज्ञानत्वं परमात्मलिंगम्॥

## ३ गुहाप्रविष्टाधिकरणम्। सू० ११-१२।

गुहां प्रविष्टावा नौ हि तद्दर्शनात् ॥११॥

कठवल्लीष्वेव पठ्यते— 'ऋतं पिब ौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे। छायातपौ ब्रह्मविदो वदन्ति पंचाग्नयो ये च त्रिणाचिके ः' इति। तत्र संशयः, किमिह बुद्धिजीवौ निर्दिष्टावुत जीवपरमात्मानाविति। यदि बुद्धिजीवौ, ततो बुद्धिप्रधानात्कार्यकरण घाताद्विलक्षणो जीवः प्रतिपादितो भवति। तदपीह प्रतिपादयितव्यं, 'येयं प्रेते विचिकित मनुष्ये -स्तीत्येके नायमस्तीति चैके। एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीयः' इति पृष्टत्वात्। अ जीवपरमात्मानौ ततो जीवाद्वि क्षणः परमात्मा प्रतिपादितो भवति। दपीह प्रतिपादयि व्यं, 'अन्यत्र धर्मादन्यत्राधर्मा-

दन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद' ॥ इति पृष्टत्वात् । अत्राहाक्षेसा— उभावप्येतौ पक्षौ न भवतः । कस्मात्, ऋतपानं हि र्मफलोपभोगः, 'सुकृतस्य लोके' इति लिंगात् । तच्चेतनस्य क्षेत्रज्ञस्य संभवति, नाचे नाय बुद्धेः । 'पिबन्तौ' इति च द्विवचनेन द्वयोः पानं दर्शयति श्रुतिः । अतो बुद्धिक्षेत्रज्ञपक्षस्तावन्न भवति । अतएव क्षेत्रज्ञपरमात्मपक्षोऽपि न भवति, चेतनेऽपि परमात्मनि ऋतपानासंभवात् । 'अनश्नन्नन्योऽभिचाकशीति' इति मंत्रवर्णादिति । अत्रोच्यते— नैष दोषः । त्रिणो गच्छन्तीत्येकेनापि छत्रिणा बहूनां अच्छत्रिणां छत्रित्वोपचारदर्शनात् । एवमेकेनापि पिबता द्वौ पिबन्तावुच्येते । यद्वा जीवस्तावत्पिबति, ईश्वरस्तु पाययति । पाययन्नपि पिबतीत्युच्यते । पाचयितर्यपि पक्तृत्वप्रसिद्धिदर्शनात् । बुद्धिक्षेत्रज्ञपरिग्रहोऽपि संभवति, करणे कर्तृत्वोपचारात् । एधांसि पचन्तीति प्रयोगदर्शनात् । नचाध्यात्माधिकारेऽन्यौ कौचित् द्वावृतं पिबन्तौ भवतः । तस्मात् बुद्धिजीवौ स्यातां, जीवपरमात्मानौ वेति यः ॥

किं तावत्प्राप्तं, बुद्धिक्षेत्रज्ञाविति । कुतः, 'गुहां प्रविष्टौ' इति विशेषणात् । यदि शरीरं गुहा, यदि वा हृदयं, उभयथापि बुद्धिक्षेत्रज्ञौ गुहां प्रविष्टावुपपद्येते । नच सति संभवे र्वगतस्य ब्रह्मणो विशि देशत्वं युक्तं कल्पयितुम् । 'सुकृतस्य लोके' इति च कर्मगोचरानतिक्रमं दर्शयति । परमात्मा तु न सुकृतस्य वा दुष्कृतस्य वा गोचरे वर्तते, 'न कर्मणा वर्धते नो कनीयान्' इति श्रुतेः । 'छायातपौ' इति च चेतनाचेतनयोर्निर्देश उपपद्यते। छायातपवत्परस्परविलक्षणत्वात् । तस्माद्बुद्धिक्षेत्रज्ञाविहोच्येयातामित्येवं प्राप्ते ब्रूमः— विज्ञानात्मपरमात्मानौ इहोच्येयाताम् । कस्मात्, आत्मानौ हि उभावपि चेतनौ समानस्वभावौ । संख्याश्रवणे च समानस्वभावेष्वेव लोके तिर्दृश्यते । अस्य गोर्द्वितीयोऽन्वेष्टव्य इत्युक्ते गौरेव द्वितीयोऽन्विष्यते, नाश्वः पुरुषो वा । तादिह ऋतपानेन लिंगेन निश्चिते विज्ञानात्मनि द्वितीयान्वेषणायां समानस्वभावश्चेतनः परमात्मैव प्रतीयते । ननूक्तं गुहाहितत्वदर्शनान्न परमात्मा प्रत्येतव्य इति । गुहाहितत्वदर्शनादेव परमात्मा प्रत्येतव्य इति वदामः । गुहाहितत्वं तु श्रुतिस्मृतिष्वसकृत्परमात्मन एव दृश्य-

ते— 'गुहाहितं गह्वरेष्ठं पुराणम्' 'यो वेद निहितं गुहायां परमे व्योमन्' 'आत्मानमन्विच्छ गुहां प्रविष्टम्' इत्याद्यासु। सर्वगतस्यापि ब्रह्मण उपलब्ध्यर्थो देशविशेषोपदेशो न विरुध्यत इत्येतदप्युक्तमेव। सुकृतलोकवर्तित्वं तु छत्रित्ववदेकस्मिन्नपि वर्तमानमुभयोरविरुद्धम्। छायातपावित्यप्यविरुद्धम्। छायातपवत्परस्परविलक्षणत्वात् संसारित्वासंसारित्वयोः। अविद्याकृतत्वात्संसारित्वस्य, पारमार्थिकत्वाच्चासंसारित्वस्य। तस्माद्विज्ञानात्मपरमात्मानौ गुहां प्रविष्टौ गृह्येते ॥११॥

कुतश्च विज्ञानात्मपरमात्मानौ गृह्येते—

## विशेषणाच्च ॥१२॥

विशेषणं च विज्ञानात्मपरमात्मनोरेव भवति। 'आत्मानं रथिनं विद्धि शरीरं रथमेव तु' इत्यादिना परेण ग्रंथेन रथिरथादिरूपककल्पनया विज्ञानात्मानं रथिनं संसारमोक्षयोर्गन्तारं कल्पयति। 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्, इति च परमात्मानं गंतव्यं कल्पयति। तथा 'तं दुर्दर्शं गूढमनुप्राविष्टं गुहाहितं गह्वरेष्ठं पुराणम्। अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति' इति पूर्वस्मिन्नपि ग्रंथे मंतृमंतव्यत्वेनैतावेव विशेषितौ। प्रकरणं चेदं परमात्मनः। 'ब्रह्मविदो वदन्ति' इति च वक्तृविशेषोपादानं परमात्मपरिग्रहे घटते। तस्मादिह जीवपरमात्मानावुच्येयाताम्। एष एव न्यायः 'द्वा सुपर्णा सयुजा सखाया' इत्येवमादिष्वपि। तत्रापि ह्यध्यात्माधिकारान्न प्राकृतौ सुपर्णावुच्येते। 'तयोरन्यः पिप्पलं स्वाद्वत्ति' इत्यदनलिंगाद्विज्ञानात्मा भवति। 'अनश्नन्नन्योऽभिचाकशीति' इत्यनशनचेतनत्वाभ्यां परमात्मा। अनंतरे च मंत्रे तावेव द्रष्टृद्रष्टव्यभावेन विशिनष्टि— 'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः। जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः' इति ॥

अपर आह— 'द्वा सुपर्णा' इति नेयमृगस्याधिकरणस्य सिद्धान्तं भजते, पैंगिरहस्यब्राह्मणेनान्यथा व्याख्यातत्वात्— "तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वमनश्नन्नन्योऽभिचाकशीतीत्यनश्नन्नन्योऽभिपश्यति ज्ञस्तावेतौ सत्त्वक्षेत्रज्ञौ'—इति। सत्त्वशब्दो जीवः क्षेत्रज्ञशब्दः परमात्मेति यदुच्यते, तन्न, सत्त्वक्षेत्रज्ञशब्दयोरन्तःकरणशारीरपरतया प्रसिद्धत्वात्। तत्रैव च व्या-

ख्यातत्वात्— 'तदेतत्सत्त्वं येन स्वप्नं पश्यति, अथ योऽयं शारीर उपद्रष्टा स क्षेत्रज्ञस्तावेतौ सत्त्वक्षेत्रज्ञौ' इति। नाप्यस्याधिकरणस्य पूर्वपक्षभावं भजते। नह्यत्र शारीरः क्षेत्रज्ञः कर्तृत्वभोक्तृत्वादिना संसारधर्मेणोपेतो विवक्ष्यते। कथं तर्हि? सर्वसंसारधर्मातीतो ब्रह्मस्वभावश्चैतन्यमात्रस्वरूपः 'अनश्नन्नन्योऽभिचाकशीति अनश्नन्नन्योऽभिपश्यति ज्ञः' इति वचनात्। ' त्व- सि' 'क्षेत्रज्ञं चापि मां विद्धि' इत्यादिश्रुतिस्मृतिभ्यश्च। ताव । च विद्योपसंहारदर्शनमेवमेवावकल्पते, ' वितौ त्वक्षेत्रज्ञौ न ह वा एवंविदि किंचन रज आध्वंसते' इत्यादि। कथं पुनरस्मिन्पक्षे 'तयोरन्यः पिप्पलं स द्वत्तीति सत्त्वम्' इत्यचेतने त्वे भोक्तृत्ववचनमिति। उच्यते— नेयं श्रुतिरचे - नस्य त्वस्य भोक्तृत्वं वक्ष्यामीति प्रवृत्ता। किं तर्हि, चेतनस्य क्षेत्रज्ञस्याभोक्तृत्वं ब्रह्मस्वभावतां च वक्ष्यामीति। तदर्थं सुखदुःखादिविक्रियावति सत्त्वे भोक्तृत्वमध्यारोपयति। इदं हि कर्तृत्वं भोक्तृत्वं च त्वक्षेत्रज्ञयोरितरेतरस्वभावाविवेककृतं कल्प्यते। परमार्थ स्तु नान्यतरस्यापि संभवति, अचेतनत्वात्सत्त्वस्य, अविक्रियत्वाच्च क्षेत्रज्ञस्य। अविद्याप्रत्युपस्थापितस्वभावत्वाच्च सत्त्वस्य सुतरां न भवा । तथाच श्रुतिः— 'यत्र वा अन्यदिव स्यात्तत्रान्योऽन्यत्पश्येत्' इत्यादिना स्वप्नदृष्टहस्त्यादिव्यवहारवदविद्याविषय एव कर्तृत्वादिव्यवहारं दर्शयाति। 'यत्र त्वस्य र्वमात्मैवाभूत्तत्केन कं पश्येत्' इत्यादिना च विवेकिनः कर्तृत्वादिव्यवहाराभावं दर्शयाति॥१२॥

४ अंतराधिकरणम्। सू० १३-१ ।

अंतर उपपत्तेः ॥१३॥

'य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति। तद्यद्यप्यस्मिन्सर्पिर्वोदकं वा सिंचति वर्त्मनी एव गच्छाति' इत्यादि श्रूयते। तत्र संशयः— किमयं प्रतिबिंबात्माक्ष्यधिकरणो निर्दिश्यते अथवा विज्ञानात्मा, उत देवतात्मेन्द्रियस्याधिष्ठाता अथवेश्वर इति। किं तावत्प्राप्तम्, छायात्मा पुरुषप्रतिरूप इति। कुतः, तस्य दृश्यमानत्वप्रसिद्धेः। 'य एषोऽक्षिणि पुरुषो दृश्यते' इति च प्रसिद्धवदुपदेशात्। विज्ञानात्मनो वायं निर्देश इति युक्तम्। हि चक्षुषा रूपं पश्यंश्चक्षुषि संनिहितो भवति। आत्मशब्दश्चास्मिन्पक्षेऽनुकूलो भवति। आदित्यपुरुषो वा चक्षुषोऽनुग्राहकः

प्रतीयते, 'रश्मिभिरेषोऽस्मिन्प्रतिष्ठितः' इति श्रुतेः । अमृतत्वादीनां च देवतात्मन्यपि कथंचित्संभवात् । नेश्वरः, स्थानविशेषनिर्देशात्, इत्येवं प्राप्ते ब्रूमः परमेश्वर एवाक्षिण्यभ्यंतरः पुरुष इहोपदिष्ट इति । कस्मात्, उपपत्तेः । उपपद्यते हि परमेश्वरे गुणजातं इहोपदिश्य ानम् । आत्मत्वं ाव-न्मुख्यया वृत्त्या परमेश्वर उपपद्यते । ' आत्मा तत्त्वमसि' इति श्रुतेः । अमृ त्वाभयत्वे च तस्मिन्नसकृत् श्रूयेते । तथा परमेश्वरानुरूपमेतदक्षिस्थान । यथाहि परमेश्वरः सर्वदोषैरलिप्तः, अपह पाप्मत्वादिश्रवणात् । तथाक्षिस्थानं सर्वलेपरहितमुपादिष्टं, 'तद्यद्यप्यस्मिन्सर्पिर्वोदकं वा सिंचति वर्त्मनी एव गच्छति' इति श्रुतेः । संयद्वामत्वादिगुणोपदेशश्च तस्मिन्नवकल्पते । 'एतं यद्वाम इत्याचक्षते एतं हि र्वाणि वामान्यभि यन्ति' । 'एष उ एव वामनीरेष हि सर्वाणि वामानि नयति' । 'एष उ एव भामनीरेष हि सर्वेषु लोकेषु भाति' इति च । अत उपपत्तेरंतरः परमेश्वरः ॥१३॥

स्थानादिव्यपदेशाच्च ॥१४॥

कथं पुनराकाशवत् र्वगतस्य ब्रह्मणोऽक्ष्यल्पं स्थानमुपपद्यत इति । अत्रोच्यते— भवेदेषाऽनवक्लृप्तिः, यद्येतदेवैकं स्थानमस्य निर्दिष्टं भवेत् । सन्ति ह्यन्यान्यपि पृथिव्यादीनि स्थानान्यस्य निर्दिष्टानि— 'यः पृथिव्यां तिष्ठन्' इत्यादिना । तेषु हि चक्षुरपि निर्दिष्टम्— 'यश्चक्षुषि तिष्ठन्' इति । 'स्थानादिव्यपदेशा ' इत्यादिग्रहणेनैतद्दर्शयति—न केवलं स्थानमेवैकमनुचि ं ब्रह्मणो निर्दिश्यमानं दृश्यते, किं तर्हि नामरूपमित्येवंजातीयकमप्यनामरूपस्य ब्रह्मणोऽनुचितं निर्दिश्यमानं दृश्यते— 'तस्योदिति नाम' 'हिरण्यश्मश्रुः' इत्यादि । निर्गुणमपि सद्ब्रह्म नामरूपगतैर्गुणैः सगुणमुपासनार्थं त्र तत्रोपदिश्यत इत्येतदप्युक्तमेव । सर्वगतस्यापि ब्रह्मण उपलब्ध्यर्थं स्थानविशेषो न विरुध्यते, शालग्राम इव विष्णोरित्येतदप्युक्तमेव ॥१४॥

सुखविशिष्टाभिधानादेव च ॥१५॥

अपिच नैवात्र विवदितव्यं, किं ब्रह्मास्मिन्वाक्येऽभिधीयते न वेति । सुखविशिष्टाभिधानादेव ब्रह्मत्वं सिद्धम् । सुखविशिष्टं हि ब्रह्म यद्वाक्योपक्रमे प्रक्रान्तं 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इति, तदेवेहाभिहितं, प्रकृतपरिग्रहस्य न्याय्यत्वात् । 'आचार्यस्तु ते गतिं वक्ता' इति च गतिमात्राभिधानप्र-

तिज्ञा त्। कथं पुनर्वाक्योपक्रमे सुखविशिष्टं ब्रह्म विज्ञायत इति । उच्यते— 'प्राणो ब्र कं ब्रह्म खं ब्रह्म' इत्येतदग्नीनां वचनं श्रुत्वोपको उवाच— 'विजानाम्यहं यत्प्राणो ब्रह्म कं च तु खं च न विजानामि' इति । तत्रेदं - तिवचनम्— 'यद्वाव कं तदेव खं यदेव खं तदेव कम्' इति । तत्र खंशब्दो भूताकाशे निरूढो लोके । यदि तस्य विशेषणत्वेन कंशब्दः खवाची नोपादीयेत, तथा सति केवले भूताकाशे ब्रह्म ब्दो नामादिष्विव प्रतीकाभिप्रायेण प्रयुक्त इति प्रतीतिः स्यात् । तथा कंशब्दस्य विषयेन्द्रियसंपर्कजनिते सामये सुखे प्रसिद्धत्वात्, यदि तस्य खंशब्दो विशेषणत्वेन नोपादीयेत, लौकिकं सुखं ब्रह्मेति प्रतीतिः यात् । इतरेतरविशेषितौ तु कंखंशब्दौ सुखात्मकं ब्रह्म गमयतः । तत्र द्वितीये ब्रह्मशब्देऽनुपादीयमाने कं खं ब्रह्मेत्येवोच्यमाने कंशब्दस्य विशेषणत्वेनैवोपयुक्त त्सुखस्य गुणस्याध्येयत्वं स्यात्, तन्मा भूदित्युभयोः कं शब्दयोर्ब्रह्मशब्दशिरस्त्वं 'कं ब्रह्म खं ब्रह्म' इति । इष्टं हि यापि गुणस्य गुणिवद्ध्येयत्वम् । देवं वाक्योपक्रमे सुखविशि ब्रह्मोपदिष्टम् । प्रत्येकं च गार्हपत्यादयोऽग्नयः स्वं स्वं महिमानमुपदिश्य 'एषा सोम्य तेऽस्मद्विद्यात्मविद्या च' इत्युपसंहरन्तः पूर्वत्र ब्रह्म निर्दिष्टमिति ज्ञापयन्ति । 'आचार्यस्तु ते गतिं वक्ता' इति च गतिमात्राभिधानप्रतिज्ञानमर्थान्तरविवक्षां वारयति । 'यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते' इति चाक्षिस्थानं पुरुषं विजानतः पापेनानुपघातं ब्रुवन्नक्षिस्थानस्य पुरुषस्य ब्रह्मत्वं दर्शयति । स्मात्प्रकृतस्यैव ब्रह्मणोऽक्षिस्थानतां संयद्वामत्वादिगुणतां चोक्त्वार्चिरादिकां तद्विदो गतिं वक्ष्यामीत्युपक्रमते— 'य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाच' इति ॥ १५॥

## ुतोपनिषत्कगत्यभिधानाच्च ॥१६॥

इतश्चाक्षिस्थानः पुरुषः परमेश्वरः, यस्मात् श्रुतोपनिषत्कस्य श्रुतरहस्यविज्ञानस्य ब्रह्मविदो या गतिर्देवयानाख्या प्रसिद्धा श्रुतौ— 'अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययात्मानमन्विष्यादित्यमभिजयन्ते, एतद्वै प्राणानामायतनमेतदमृतमभयमेतत्परायणमेतस्मान्न पुनरावर्तन्ते' इति । स्मृ ावपि— "अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः" इति । सैवेहाक्षिपुरुषविदोऽभिधीयमाना दृश्य-

ते। 'अथ यदु चैवास्मिञ्छव्यं कुर्वन्ति यदि च नार्चिषमेवाभिसंभवन्ति' इ-त्युपक्रम्य 'आदित्याच्चंद्रमसं चंद्रमसो विद्युतं तत्पुरुषोऽमानवः एना-न्ब्रह्म गमयत्येष देवपथो ब्रह्मप एतेन प्रतिपद्यमाना इमं मानवमा तं ना-वर्तन्ते' इति। तदिह ब्रह्म द्विषयया सिद्धया गत्याक्षिस्थानस्य ब्रह्मत्वं निश्चीयते ॥१६॥

**अनवस्थितेर नेतरः ॥१ ॥**

यत्पुनरुक्तं छाया ।, विज्ञानात्मा, देवतात्मा वा स्यादक्षिस्थान इति। अत्रोच्यते— न छायात्मादिरितर इह ग्रहणमर्हति। कस्मात्, अन-वस्थितेः। न ावच्छायात्मनश्चक्षुषि नित्यमवस्थानं संभवति। दैव हि कश्चित्पुरुषश्चक्षुरासीदति तदा चक्षुषि पुरुषच्छाया दृश्यते, अपगते स्मिन्न दृश्यते। 'य एषोऽक्षिणि पुरुषः' इति च श्रुतिः न्निधानात्स्वचक्षुषि यमानं पुरुषमुपास्यत्वेनोपदिशति। चोपासनाकाले छायाकरं कंचित् - रुषं चक्षुःसमीपे निधाप्योपास्त इति युक्तं कल्पयितु । 'अस्यैव शरीरस्य ाशमन्वेष नश्यति' इति श्रुतिः च्छायात्मनोऽप्यनवस्थितत्वं दर्शयति। अ-भवाच्च, तस्मिन्नमृतत्वादीनां गुणानां न छायात्मनि प्रतीतिः। तथा वि-ज्ञानात्मनोऽपि साधारणे कृत्स्नशरीरेन्द्रियसंबंधे सति न चक्षुष्येवावस्थितत्वं वक्तुं शक्यम्। ब्रह्मणस्तु सर्वव्यापिनोऽपि दृष्ट उपलब्ध्यर्थो हृदयादिदेश-विशेषसंबंधः। समानश्च विज्ञानात्मन्यप्यमृतत्वादीनां गुणानाम भवः। य-द्यपि विज्ञानात्मा परमात्मनोऽनन्य एव, तथाप्यविद्याकामकर्मकृतं स्मि-न्मर्त्यत्वमध्यारोपितं भयं चेत्यमृतत्वाभयत्वे नोपपद्येते। संयद्वामत्वादयश्च एतस्मिन्ननैश्वर्यादनुपपन्ना एव। देवतात्मनस्तु 'रश्मिभिरेषोऽस्मिन्प्रतिष्ठितः' इति श्रुतेर्यद्यपि चक्षुष्यवस्थानं स्यात्तथाप्यात्मत्वं तावन्न संभवति, पराग्रूप-त्वात्। अमृतत्वादयोऽपि न भवन्ति, उत्पत्तिप्रलयश्रवणात्। अ रत्व-मपि देवानां चिरकालावस्थानापेक्षम्। ऐश्वर्यमपि परमेश्वरायत्तं न स्वाभा-विकम्। 'भीषास्माद्वातः पवते भीषोदेति सूर्यः। भीषास्मादग्निश्चेंद्रश्च मृत्यु-र्धावति पंचमः' इति मंत्रवर्णात्। तस्मात्परमेश्वर एवायमक्षि थानः प्रत्ये-तव्यः। अस्मिंश्च पक्षे दृश्यत इति सिद्धवदुपादानं शा ाद्यपेक्षं विद्वद्वि-षयं प्ररोचनार्थमिति व्याख्येयम् ॥१७॥

५ अंतर्याम्‍ धिकरण । सू० १८–२० ।

अंतर्याम्‍ धिदैवादिषु तद्धर्मव्यपदेशात् ॥ ८॥

'य इमं च लोकं परं च लोकं सर्वाणि च भूतानि योऽन्तरो यमयति' इत्युपक्रम्य श्रूयते— 'यः पृथिव्यां तिष्ठन्पृथिव्या अंतरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमंतरो यमयत्येष त आत्मान्तर्याम्यमृतः' इत्यादि । अत्राधिदैवतमाधिलोकं अधिवेदमधियज्ञमधिभूतमध्यात्मं च कश्चिदं रवस्थितो यमयितान्तर्यामीति श्रूयते । किमधिदैवाद्याभिमानी देवतात्मा कश्चित्किंवा प्राताणिमाद्यैश्वर्यः कश्चिद्योगी, किंवा परमात्मा, किंवार्थान्तरं किंचिदित्यपूर्वसंज्ञादर्शनात्संशयः । किं ताव : प्रतिभाति ? संज्ञाया अप्रसिद्धत्वात्संज्ञिनाऽप्यप्रसिद्धेनार्थान्तरेण केनचिद्भवितव्यमिति । अथवा ानिरूपितरूपमर्थान्‍ रं किंचिदपि शक्यमस्त्यभ्युपगंतुम् । अंतर्यामिशब्दश्चान्तर्यमनयोगेन प्रवृत्तो नात्यंतमप्रसिद्धः । तस् ात्पृथिव्याद्याभिमानी कश्चिद्देवोऽन्तर्यामी स्यात् । तथाच श्रूयते— 'पृथिव्येव यस्यायतनमाग्निर्लोको मनो ज्योतिः' इत्यादि । च कार्य रणवत्त्वात्पृथिव्यादीन् अंतस्तिष्ठन्यमयतीति युक्तं देवतात्मनो यमयितृत्वम् । योगिनो वा कस्यचित्सिद्धस्य सर्वानुप्रवेशेन यमयि ृत्वं स्यात् । नतु परमात्मा प्रतीयेत, अकार्यकरणत्वादित्येवं प्राप्त इदमुच्यते . योऽन्तर्याम्यधिदैवादिषु श्रूयते स परमात्मैव स्यान्नान्य इति । ुतः, तद्धर्मव्यपदेशात् । स्य हि परमात्मनो धर्मा इह निर्दिश्यमाना दृश्यन्ते । पृथिव्यादि तावदधिदैवादिभेदभिन्नं मस्तं विकारजातमं स्त - न्यमयतीति परमात्मनो यमयितृत्वं धर्म उपपद्यते । वविकारकारणत्वे ति र्वशक्त्युप त्तेः । 'एष त आत्माऽन्त ाम्यमृतः' इति चात्मत्वा ृतत्वे मुख्ये परमात्मन उपपद्येते । 'यं पृथि ी न वेद' इति च पृथि वीदेव ाया अविज्ञेयमंतर्यामिणं वन्देवतात्मनोऽन्यं अंतर्यामिणं दर्शयति । 'पृथिवी देवता हमस्मि पृथिवीत्यात्मानं विजानीयात्' ' ष्टोऽश्रुतः' इत्यादिव्यदेशो पादिविहीनत ात्परमात्मन उपपद्यत इति । यत्त्वकार्यकरणस्य परमात्मनो यमयितृ नोपपद्यत इति, नै दोषः । यान्नियच्छति तत्कार्यकरणैरेव, तस्य ार्यकरणवत्त्ोपपत्तेः । तस्याप्यन्यो नियन्तेत्यन ादोषश्च भवति, भेदाभावात् । भेदे सत्यनवस्थादोषोपपत्तिः । तस्मात्परमा-

त्सैवान्तर्यामी ॥१८॥

**नच स्मार्तमतद्धर्माभिलापा ॥१९॥**

स्यादेतत् । अदृष्टत्वादयो धर्माः सांख्यस्मृतिकल्पितस्य प्रधानस्याप्युपपद्यन्ते, रूपादिहीनतया तस्य तैरभ्युपगमात् । "अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः" इति हि स्मरन्ति, तस्यापि नियंतृत्वं सर्वविकारकारणत्वादुपपद्यते । तस्मात्प्रधानमंतर्यामिशब्दं स्यात् । 'ईक्षतेर्नाशब्द' [१.१.५] इत्यत्र निराकृतमपि त्प्रधानं इहादृष्टत्वादिव्यपदेशसंभवेन पुनराशंक्यते । अत उत्तरमुच्यते— नच स्मार्तं प्रधानमंतर्यामिशब्दं भवितुमर्हति । कस्मात्, अतद्धर्माभिलापात् । यद्यप्यदृष्टत्वादिव्यपदेशः प्रधानस्य भवति, तथापि न द्रष्टृत्वादिव्यपदेशः संभवति, प्रधानस्याचेतनत्वेन तैरभ्युपगमात् । 'अदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाता' इति हि वाक्यशेष इह भवति । आत्मत्वमपि न प्रधानस्योपपद्यते ॥१९॥

यदि प्रधानमात्मत्वद्रष्टृत्वाद्य भवात् नांतर्याम्यभ्युपगम्यते, शारीरस्तर्ह्यन्तर्यामी भवतु । शारीरो हि चेतनत्वात् द्रष्टा श्रोता मन्ता विज्ञाता च भवति, आत्मा च प्रत्यक्त्वात् । अमृतश्च, धर्माधर्मफलोपभोगोपपत्तेः । अदृष्टत्वादयश्च धर्माः शारीरे प्रसिद्धाः । दर्शनादिक्रियायाः कर्तरि प्रवृत्तिविरोधात् । 'न द्रष्टेर्द्रष्टारं पश्येः' इत्यादिश्रुतिभ्यश्च । तस्य च कार्यकरणसंघातमंतर्यमयितुं शीलं, भोक्तृत्वात् । तस्माच्छारीरोऽन्तर्यामीत्यत उत्तरं पठति

**शारीरश्चोभयेऽपि हि भेदेनैन धीयते ॥२०॥**

नेति पूर्वसूत्रादनुवर्तते । शारीरश्च नान्तर्यामीष्यते । कस्मात् । यद्यपि द्रष्टृत्वादयो धर्मास्तस्य संभवन्ति तथापि घटाकाशवदुपाधिपरिच्छिन्नत्वान्न कात्स्न्येन पृथिव्यादिष्वंतरवस्थातुं नियंतुं च शक्नोति । अपिचोभयेऽपि हि शाखिनः काण्वा माध्यंदिनाश्चान्तर्यामिणो भेदेनैनं शारीरं पृथिव्यादिवदधिष्ठानत्वेन नियम्यत्वेन चाधीयते— 'यो विज्ञाने तिष्ठन्' इति काण्वाः, 'य आत्मनि तिष्ठन्' इति माध्यंदिनाः । 'य आत्मनि तिष्ठन्' इत्यस्मिंस्तावत्पाठे भवत्यात्मशब्दः शारीरस्य वाचकः । 'यो विज्ञाने तिष्ठन्' इत्यस्मिन्नपि पाठे विज्ञानशब्देन शारीर उच्यते । विज्ञानमयो हि शारीरः ।

स्माच्छारीरादन्य ईश्वरोऽन्तर्यामीति सिद्धम् । कथं पुनरेकस्मिन्देहे द्वौ द्रष्टारावुपपद्येते, यश्चायमीश्वरोऽन्तर्यामी यश्चायमितरः शारीरः । का पुनरिहानुपपत्तिः । 'नान्योऽतोऽस्ति द्रष्टा' इत्यादि श्रुतिवचनं विरुध्येत । अत्र हि प्रकृतादन्तर्यामिणोऽन्यं द्रष्टारं श्रोतारं मन्तारं विज्ञा रं चात्मानं निषेधति । नियंत्रंतरप्रतिषेधार्थमेतद्वचनमितिचेत् । न । नियंत्रंतराप्रसंगादविशेषश्रवणाच्च । अत्रोच्यते— अविद्याप्रत्युपस्थापितकार्यकरणोपाधिनिमित्तोऽयं शारीरान्तर्यामिणोर्भेदव्यपदेशो न पारमार्थिकः । एको हि प्रत्यगात भवति, न द्वौ प्रत्यगात्मानौ भवतः । एकस्यैव तु भेदव्यवहार उपाधिकृतो यथा घटाकाशो महाका इति । तश्च ज्ञातृज्ञेयादिभेदश्रु यः -क्षादीनि च प्रमाणानि सं ारानुभवो विधिप्रतिषेधशास्त्रं चेति वमेतदुपपद्यते । तथाच श्रुतिः— 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' इत्यविद्याविषये वं व्यवहारं दर्शयति । 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' इति विद्याविषये वं व्यवहारं वारयति ॥२०॥

६ अदृश्यत्वाधिकरण । सू० २१–२३ ।

अदृश् त्वादिगुणको धर्मोक्तेः ॥२१॥

'अथ परा यया तदक्षरमधिगम्यते', 'यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः' इति श्रूयते । तत्र शयः— किमयमदृश्यत्वादिगुणको भूतयोनिः प्रधानं स्यात् उत शारीरः, आहोस्वित्परमेश्वर इति । तत्र प्रधानमचेतनं भूतयोनिरिति युक्तं, अचेतनानामेव तत्र दृष्टान्तत्वेनोपादानात् । 'यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः संभवन्ति । यथा सतः पुरुषात्केशलोमानि तथाक्षरात्संभवतीह विश्वम्' इति । नमूर्णनाभिः पुरुषश्च चेतनाविह दृष्टान्तत्वेनोपात्तौ । नेति ब्रूमः । नहि केवलस्य चेतनस्य तत्र सूत्रयोनित्वं केशलोमयोनित्वं वास्ति । चेतनाधिष्ठितं चेतनमूर्णनाभिशरीरं सूत्रस्य योनिः, पुरुषशरीरं च केशलोम्नामिति प्रसि । अपिच पूर्वत्रादृष्टत्वाद्यभिलापसंभवेऽपि द्रष्टृत्वाद्यभिलापासंभवान्न प्रधानमभ्युपगतम् । इह त्वदृश्यत्वादयो धर्माः प्रधाने संभवन्ति । चात्र विरुध्यमानो धर्मः कश्चिदभिलप्यते । ननु 'यः सर्वज्ञः सर्ववित्' इत्ययं वा -

षोऽचेतने प्रधाने न भवति, कथं प्रधानं भूतयोनिः प्रातिज्ञायत इति। अत्रोच्यते— 'यया तदक्षरमधिगम्यते' 'यत्तदद्रेश्यम्' इत्यक्षरशब्देनादृश्य- ादिगुणकं भूतयोनिं श्रावयित्वा पुनरंते श्रावयिष्यति— 'अक्षरात्परतः परः' इति। तत्र यः परोऽक्षरात् श्रुतः स र्वज्ञः र्ववित् भविष्यति। प्र- धानमेव त्वक्षरशब्दनिर्दि भूतयोनिः। यदा तु योनिशब्दो निमित्तवाची तदा शारीरोऽपि भूतयोनिः स्यात्, धर्माधर्माभ्यां भूतजातस्योपार्जनादिति। एवं प्राप्तेऽभिधीयते— योऽयमदृश्यत्वादिगुणको भूतयोनिः परमेश्वर एव स्यान्नान्य इति। कथमेतदवगम्यते? धर्मोक्तेः। परमेश्वरस्य हि धर्म इहो- च्यमानो दृश्यते— 'यः र्वज्ञः सर्ववित्' इति। नहि प्रधानस्याचेतनस्य शारीरस्य वोपाधिपरिच्छिन्नदृष्टेः सर्वज्ञत्वं सर्ववित्त्वं वा भवति। नन्वक्षर- शब्दनिर्दिष्टाद्भूतयोनेः परस्यैव एतत र्वज्ञत सर्ववित्त्वं च, न भूतयोनिवि- षयमित्युक्तम्। अत्रोच्यते— नैवं भवति। यत्कारणं 'अक्षरात्संभवतीह विश्वम्' इति प्रकृतं भूतयो मिह जायमानप्रकृतित्वेन निर्दिश्य, अनंतरमपि ायमानप्रकृतित्वेनैव सर्वज्ञं निर्दिशति— 'यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः। तस्मादेतद्ब्र नाम रूपमन्नं च जायते' इति। तर ान्निर्देशसाम्येन प्रत्यभिज्ञायमानत्वात्प्रकृतस्यैवाक्षरस्य भूतयोनेः सर्वज्ञत्वं सर्ववित्त्वं च धर्म उच्य इति गम्यते। 'अक्षरात्परतः परः' इत्यत्रापि न प्रकृताद्भूतयोनेर - रात्परः कश्चिदभिधीयते। कथमेतदवगम्यते? 'येनाक्षरं पुरुषं वेद त्यं प्रोवाच तां तत्त्व ो विद्याम्' इति प्रकृतस्यैवाक्षरस्य भूतयोनेरदृश्यत्वादिगुणकस्य वक्तव्यत्वेन प्रतिज्ञातत्वात्। कथं तर्हि 'अक्षरात्पर : परः' इति व्यपदिश्यत इति उत्तरसूत्रे तद्वक्ष्यामः। अपिचात्र द्वे विद्ये वेदितव्ये उक्ते 'परा चैवापरा च' इति। तत्रापरामृग्वेदादिलक्षणां विद्यामुक्त्वा वीति— 'अथ परा यया तदक्षरमधिगम्यते' इत्यादि। त्र परस्या विद्याया विषयत्वेनाक्षरं श्रु- तम्। यदि पुनः परमेश्वरादन्यददृश्यत्वादिगुण क्षरं परिकल्प्येत नेयं परा विद्या स्यात्। परापरविभागो यं विद्ययोरभ्युदयनिःश्रेय या परि - ल्प्यते। नच धानस्य विद्या निःश्रेय फला केनचिदभ्युपगम्यते। तिस्रश्च विद्याः प्रतिज्ञायेरन्, त्वत्पक्षेऽक्षराद्भूतयोनेः परस्य परमात्मनः प्रतिपाद्यमा- नत्वात्। द्वे एव तु विद्ये वेदितव्ये इह निर्दिष्टे। ' स्मिन्नु भगवो विज्ञाते

सर्वमिदं विज्ञातं भवति' इति चैकविज्ञानेन सर्वविज्ञानापेक्षणं सर्वात्मके ब्रह्मणि विवक्ष्यमाणेऽवकल्प्यते, नाचेतनमात्रैकायतने प्रधाने, भोग्यव्यतिरिक्ते वा भोक्तरि । अपिच 'स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह' इति ब्रह्मविद्यां प्राधान्येनोपक्रम्य परापरविभागेन परां विद्यामक्षराधिगमनीं दर्शयंस्तस्या ब्रह्मविद्यात्वं दर्शयति । सा च ब्रह्मविद्यासमाख्या तदधिगम्यस्य अक्षरस्याब्रह्मत्वे बाधिता स्यात् । अपरा ऋग्वेदादिलक्षणा कर्मविद्या ब्रह्मविद्योपक्रमे उपन्यस्यते ब्रह्मविद्याप्रशंसार्थे । 'प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म । एतच्छ्रेयो येऽभिनंदन्ति मूढा जरामृत्युं ते पुनरेवापियन्ति' इत्येवमादिनिंदावचनात् । निंदित्वा चापरां विद्यां ततो विरक्तस्य परविद्याधिकारं दर्शयति— 'परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' इति । यत्तूक्तं अचेतनानां पृथिव्यादीनां दृष्टान्तत्वेनोपादानात् दार्ष्टान्तिकेनाप्यचेतनेनैव भूतयोनिना भवितव्यमिति । तदयुक्तम् । नहि दृष्टान्तदार्ष्टान्तिकयोरत्यंतसाम्येन भवितव्यमिति नियमोऽस्ति । अपिच स्थूलाः पृथिव्यादयो दृष्टान्तत्वेनोपात्ता इति न स्थूल एव दार्ष्टान्तिको भूतयोनिरभ्युपगम्यते । तस्माददृश्यत्वादिगुणको भूतयोनिः परमेश्वर एव ॥२१॥

**विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥२२॥**

इतश्च परमेश्वर एव भूतयोनिर्नेतरौ, शारीरः प्रधानं वा । कस्मात् । विशेषणभेदव्यपदेशाभ्याम् । विशिनष्टि हि प्रकृतं भूतयोनिं शारीराद्विलक्षणत्वेन— 'दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यंतरो ह्यजः । अप्राणो ह्यमनाः शुभ्रः' इति । नह्येतद्दिव्यत्वादिविशेषणं अविद्याप्रत्युपस्थापितनामरूपपरिच्छेदाभिमानिनः तद्धर्मान्स्वात्मनि कल्पयतः शारीरस्योपपद्यते । तस्मात्साक्षादौपनिषदः पुरुष इहोच्यते । तथा प्रधानादपि प्रकृतं भूतयोनिं भेदेन व्यपदिशति— 'अक्षरात्परतः परः' इति । अक्षरमव्याकृतं नामरूपबीजशक्तिरूपं भूतसूक्ष्ममीश्वराश्रयं तस्यैवोपाधिभूतं, सर्वस्माद्विकारात्परो योऽविकारस्तस्मात्परतः पर इति भेदेन व्यपदेशात्परमात्मानमिह विवक्षितं दर्शयति । नात्र प्रधानं नाम किंचित्स्वतंत्रं तत्त्वमभ्युपगम्य तस्माद्भेदव्यपदेश

उच्यते। किं तर्हि, यदि प्रधानमपि कल्प्यमानं श्रुत्यविरोधेनाव्याकृतादिशब्दवाच्यं भूतसूक्ष्मं परिकल्प्येत, परिकल्प्यताम्। तस्माद्भेदव्यपदेशात्परमेश्वरो भूतयोनिरित्येतादिह प्रतिपाद्यते ॥२२॥

श्च परमेश्वरो भूतयोनिः—

**रूपोपन्यासा ॥२३॥**

अपिच 'अक्षरात्परतः परः' इत्यस्यानंतरं 'एतस्माज्जायते प्राणः' इति प्राणप्रभृतीनां पृथिवीपर्यन्तानां त्वानां गंमुक्त्वा तस्यैव भूतयोनेः सर्वविकारात्मकं रूपमुपन्यस्यमानं पश्यामः— 'अग्निमूर्धा चक्षुषी चंद्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः। वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा' इति। तच्च परमेश्वरस्यैवोचितं, सर्वविकारकारणत्वात्। न शारीरस्य तनुमहिम्नः। नापि प्रधानस्यायं रूपोपन्यासः भवति, सर्वभूतान्तरात्मत्वासंभवात्। तस्मात्परमेश्वर एव भूतयोनिर्नेतराविति गम्यते। कथं पुनर्भूतयोनेरयं रूपोपन्यास इति गम्यते? प्रकरणात्। 'एषः' इति च प्रकृतानुकर्षणात्। भूतयोनिं हि प्रकृत्य 'एतस्माज्जायते प्राणः', 'एष सर्वभूतान्तरात्मा' इति वचनं भूतयोनिविषयमेव भवति। यथोपाध्यायं प्रकृत्य एतस्मादधीष्वैष वेदवेदांगपारग इति वचनमुपाध्यायविषयं भवति तद्वत्। कथं पुनरदृश्यत्वादिगुणकस्य भूतयोनेर्विग्रहवद्रूपं संभवति? सर्वात्मत्वविवक्षयेदमुच्यते नतु विग्रहवत्त्वविवक्षयेत्यदोषः। 'अहमन्नमहमन्नादः' इत्यादिवत् ॥

अन्ये पुनर्मन्यन्ते— नायं भूतयोने रूपोपन्या :, जायमानत्वेनोपन्यासात्। 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' इति हि पूर्वत्र प्राणादिपृथिव्यंतं तत्त्वजातं जायमानत्वेन निरदिक्षत्। उत्तरत्रापि च 'तस्मादग्निः समिधो यस्य सूर्यः' इत्येवमादि, 'अतश्च र्वा ओषधयो रसाश्च' इत्येवमंतं जायमानत्वेनैव निर्देक्ष्यति। इहैव कथमकस्मादंतराले भूतयोने रूपमुपन्यसेत्? सर्वात्मत्वमपि सृष्टिं परि माप्योपदेक्ष्याति— 'पुरुष एवेदं विश्वं कर्म' इत्यादिना। श्रुतिस्मृत्यो त्रैलोक्यशरीरस्य प्रजापतेर्जन्मादि निर्दिश्यमानमुपलभामहे— "हिरण्यगर्भः समवर्तताग्रे भूतस्य : पतिरे आसीत्। दाधार पृथिवीं

द्यामुतेमां कस्मै देवाय हविषा विधेम" इति । मवर्ततेत्यजायतेत्यर्थः । तथा "स वै शरीरी प्रथमः स वै पुरुष उच्यते । आदिकर्ता भूतानां ब्रह्माग्रे मवर्तत" इति च । विकारपुरुषस्यापि र्वभूतान्तरात्मत्वं संभवति, प्राणात्मना सर्वभूतानामध्यात्ममवस्थानात् । अस्मिन्पक्षे 'पुरुष एवेदं वि कर्म' इत्यादिसर्वरूपोपन्यासः परमेश्वरप्रतिपत्तिहेतुरिति व्याख्येयम् ॥२३॥

वैश्वानराधिकरणम् । सू० २४–३२ ।

वैश्वानरः साधारणशब्दविशेषा ॥२४॥

'को न आत्मा किं ब्रह्म' इति, 'आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि तमेव नो ब्रूहि' इति चोपक्रम्य द्युसूर्यवाय्वाकाशवारिपृथिवीनां सुतेजस्त्वादिगुणयोगमेकैकोपासनानिंदया च वैश्वानरं प्रत्येषां मूर्धादिभावमुपदिश्याम्नायते— 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते र्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति, तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः वायुः प्राणः पृथग्वर्त्मात्मा संदेहो बहुलो बस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः' इत्यादि । तत्र संशयः— किं वैश्वानरशब्देन जाठरोऽग्निरुपदिश्यते, उत भूताग्निः, अथ तदभिमानिनी देता, अथवा शारीर, आहोस्वित्परमेश्वर इति । किं पुनरत्र संशयकारणम् । वैश्वानर इति जाठरभूताग्निदेवतानां साधारणशब्दप्रयोगादात्मेति च शारीरपरमेश्वरयोः । तत्र कस्योपादानं न्याय्यं कस्य वा हानमिति भवति संशयः । किं तावत्प्राप्तम्, जाठरोऽग्निरिति । कुतः । त्र हि विशेषेण क्वचित्प्रयोगो दृश्यते— 'अयमग्निर्वैश्वानरो योऽयमंतः पुरुषे येनेदमन्नं पच्यते यदिदमद्यते' इत्यादौ । अग्निमात्रं वा स्यात्, तत्सामान्येनापि प्रयोगदर्शनात्— "विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन्" इत्यादौ । अग्निशरीरा वा देवता स्यात्, तस्यामपि प्रयोगदर्शनात्— "वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः" इत्येवमाद्यायाः श्रुतेः देवतायामैश्वर्याद्युपेतायां संभवात् । अथात्मशब्दसामानाधिकरण्यात् उपक्रमे च 'को न आत्मा किं ब्रह्म' इति केवलात्मशब्दप्रयोगादात्मशब्दवशेन चं वैश्वानरशब्दः परिणेय इत्युच्यते, थापि रीर आत्मा स्यात्, र भोक्तृत्वेन

वैश्वानरसंनिकर्षात् । प्रादेशमात्रामिति च विशेषणस्य तस्मिन्नुपाधिपरिच्छिन्ने संभवात् । तस्मान्नेश्वरो वैश्वानर इत्येवं प्राप्ते तत इदमुच्यते— वैश्वानरः परमात्मा भवितुमर्हतीति । कुतः, ।धारणशब्दविशेषात् । साधारणशब्दयोर्विशेषः साधारणशब्दविशेषः । यद्यप्येतावुभावपि आत्मवैश्वनराशब्दौ साधारणशब्दौ,—वैश्वानरशब्दस्तु त्रयाणां साधारणः, आत्मशब्दाश्च द्वयोः,—तथापि विशेषो दृश्यते, येन परमेश्वरपरत्वं तयोरभ्युपगम्यते,— 'तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाः' इत्यादि । अत्र हि परमेश्वर एव द्युमूर्धत्वादिविशिष्टोऽवस्थान्तरगतः प्रत्यगात्मत्वेनोपन्यस्त आध्यानायेति गम्यते, कारणत्वात् । कारणस्य हि सर्वाभिः कार्यगताभिरवस्थाभिः अवस्थावत्त्वाद्द्युलोकाद्यवयवत्वमुपपद्यते । 'स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति' इति च सर्वलोकाद्याश्रयं फलं श्रूयमाणं परमकारणपरिग्रहे संभवति । 'एवं हास्य सर्वे पाप्मानः प्रदूयन्ते' इति च तद्विदः सर्वपाप्मप्रदाहश्रवणम् । 'को न आत्मा किं ब्रह्म' इति चात्मब्रह्मशब्दाभ्यामुपक्रमः । इत्येवमेतानि लिंगानि परमेश्वरमेवावगमयन्ति । तस्मात्परमेश्वर एव वैश्वानरः ॥२४॥

**स्मर्यमाणमनुमानं स्यादिति ॥२५॥**

इतश्च परमेश्वर एव वैश्वानरः, यस्मात्परमेश्वरस्यैव 'अग्निरास्यं द्यौर्मूर्धा' इतीदृशं त्रैलोक्यात्मकं रूपं स्मर्यते— "यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः । सूर्यश्चक्षुर्दिशः श्रोत्रं तस्मै लोकात्मने नमः ॥" इति । एतत्स्मर्यमाणं रूपं मूलभूतां श्रुतिमनुमापयदस्य वैश्वानरशब्दस्य परमेश्वरपरत्वेऽनुमानं लिंगं गमकं स्यादित्यर्थः । इतिशब्दो हेत्वर्थः । यस्मादिदं गमकं तस्मादपि वैश्वानरः परमात्मैवेत्यर्थः । यद्यपि स्तुतिरियं 'तस्मै लोकात्मने नमः' इति, तथापि स्तुतित्वमपि नासति मूलभूते वेदवाक्ये सम्यगीदृशेन रूपेण संभवति । "द्यां मूर्धानं यस्य विप्रा वदन्ति खं वै नाभिं चंद्रसूर्यौ च नेत्रे । दिशः श्रोत्रे विद्धि पादौ क्षितिं च सोऽचिन्त्यात्मा सर्वभूतप्रणेता ॥" इत्येवंजातीयका स्मृतिरिहोदाहर्तव्या ॥२५॥

**शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न तथादृष्ट्युपदेशादसंभवात्पुरुषमपि चैनमधीयते ॥२६॥**

अत्राह— न परमेश्वरो वैश्वानरो भवितुमर्हति । कुतः, शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च । शब्दस्तावत् वैश्वानरशब्दो न परमेश्वरे संभवति, अर्थान्तरे रूढत्वात् । तथाग्निशब्दः ' एषोऽग्निर्वैश्वानरः' इति । आदिशब्दात् 'हृदयं गार्हपत्यः' इत्याद्याग्नित्रेताप्रकल्पनम् । 'तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयम्' इत्यादिना च प्राणाहुत्यधिकरणतासंकीर्तनम् । एतेभ्यो हेतुभ्यो जाठरो वैश्वानरः प्रत्येतव्यः । तथान्तःप्रतिष्ठानमपि श्रूयते— 'पुरुषेऽन्तःप्रतिष्ठितं वेद' इति । तच्च जाठरे संभवति । यदप्युक्तं— 'मूर्धैव सुतेजाः' इत्यादेर्विशेषात्कारणात्परमात्मा वैश्वानर इति । अत्र ब्रूमः— कुतो ह्येष निर्णयः, यदुभयथापि विशेषप्रतिभाने सति परमेश्वरविषय एव विशेष आश्रयणीयो न जाठरविषय इति । अथवा भूताग्नेरंतर्बहिश्चावतिष्ठमानस्यैष निर्देशो भविष्यति । तस्यापि हि द्युलोकादिसंबंधो मंत्रवर्णादवगम्यते— "यो भानुना पृथिवीं द्यामुतेमामाततान रोद ी अंतरिक्षम्" इत्यादौ । अथवा तच्छरीराया देवताया ऐश्वर्ययोगाद्द्युलोकाद्यवयवत्वं भविष्यति । तस्मान्न परमेश्वरो वैश्वानर इति ॥

अत्रोच्यते— न तथादृष्ट्युपदेशादिति । न शब्दादिभ्यः कारणेभ्यः परमेश्वरस्य प्रत्याख्यानं युक्तम् । कुतः, तथा जाठरापरित्यागेन दृष्ट्युपदेशात् । परमेश्वरदृष्टिर्हि जाठरे वैश्वानर इहोपदिश्यते, 'मनो ब्रह्मेत्युपासीत' इत्यादिवत् । अथवा जाठरवैश्वानरोपाधिः परमेश्वर इह द्रष्टव्यत्वेनोपदिश्यते, 'मनोमयः प्राणशरीरो भारूपः' इत्यादिवत् । यदि चेह परमेश्वरो न विवक्ष्येत केवल एव जाठरोऽग्निर्विवक्ष्येत, ततो मूर्धैव सुतेजा इत्यादेर्विशेषस्यासंभव एव स्यात् । तथा तु देवताभूताग्न्यपाश्रयेणाप्ययं विशेष उपपादयितुं न शक्यते तथोत्तरसूत्रे वक्ष्यामः । यदि च केवल एव जाठरो विवक्ष्येत, पुरुषेऽन्तःप्रतिष्ठितत्वं केवलं तस्य स्यान्न तु पुरुषत्वम् । पुरुषमपि चैनमधीयते वाजसनेयिनः— "स एषोऽग्निर्वैश्वानरो यत्पुरुषः स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद" इति । परमेश्वरस्य तु सर्वात्मत्वात्पुरुषत्वं पुरुषेऽन्तःप्रतिष्ठि त्वं चोभयमुपपद्यते । ये तु 'पुरुषवि - मपि चैनमधीयते' इति सूत्रावयवं पठन्ति, तेषामेषोऽर्थः— केवलजाठरपरिग्रहे पुरुषेऽन्तःप्रतिष्ठितत्वं केवलं स्यान्न पुरुषविधत्व ् । पुरुषविधमपि चै-

नमधीयते वाजसनेयिनः– 'पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद' इति । पुरुषविधत्वं च प्रकरणाद्यदधिदैवतं द्युमूर्धत्वादि पृथिवीप्रतिष्ठितत्वान्तं, यच्चाध्यात्मं प्रसिद्धं मूर्धत्वादि चुबुकप्रतिष्ठितत्वान्तं तत्परिगृह्यते ॥२६॥

**अतएव न देवता भूतं च ॥२७॥**

यत्पुनरुक्तं भूताग्नेरपि मंत्रवर्णे द्युलोकादिसंबंधदर्शनान्मूर्धैव सुतेजा इत्याद्यवयवकल्पनं तस्यैव भविष्यतीति, यच्छरीराया देवताया वैश्वर्ययोगादिति, तत्परिहर्तव्यम् । अत्रोच्यते—अतएवोक्तेभ्यो हेतुभ्यो न देवता वैश्वानरः । तथा भूताग्निरपि न वैश्वानरः । नहि भूताग्नेरौष्ण्यप्रकाशमात्रात्मकस्य द्युमूर्धत्वादिकल्पनोपपद्यते, विकारस्य विकारान्तरात्मत्वा भवात् । तथा देवतायाः सत्यप्यैश्वर्ययोगे न द्युमूर्धत्वादिकल्पना संभवति । अकारणत्वात्परमेश्वराधीनैश्वर्यत्वाच्च । आत्मशब्दासंभवश्च वैष्वेषु पक्षेषु स्थित एव॥२७॥

**साक्षादप्यविरोधं जैमिनिः ॥२८॥**

पूर्वं जाठराग्निप्रतीको जाठराग्न्युपाधिको वा परमेश्वर उपास्य इत्युक्तं अंतःप्रतिष्ठितत्वाद्यनुरोधेन । इदानीं तु विनैव प्रतीकोपाधिकल्पनाभ्यां साक्षादपि परमेश्वरोपासनपरिग्रहे न कश्चिद्विरोध इति जैमिनिराचार्यो मन्यते । ननु जाठराग्न्यपरिग्रहेऽन्तःप्रतिष्ठितत्ववचनं शब्दादीनि च कारणानि विरुध्येरन्निति । अत्रोच्यते– अंतःप्रतिष्ठितत्ववचनं तावन्न विरुध्यते । नहीह 'पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद' इति जाठराग्न्यभिप्रायेणेदमुच्यते । स्याप्रकृतत्वादसंशब्दितत्वाच्च । कथं र्हि यत्प्रकृतं मूर्धादिचुबुकान्तेषु पुरुषावयवेषु पुरुषविधत्वं कल्पितं तदभिप्रायेणेदमुच्यते— 'पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद' इति । तथा वृक्षे शाखां प्रतिष्ठितां पश्यतीति तद्वत् । अथवा यः प्रकृतः परमात्माध्यात्ममाधिदैवतं च पुरुषविधत्वोपाधिः तस्य यत्केवलं साक्षिरूपं तदभिप्रायेणेदमुच्यते— 'पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद' इति । निश्चिते च पूर्वापरालोचनवशेन परमात्मपरिग्रहे तद्विषय एव वैश्वानरशब्दः केनचिद्योगेन वर्तिष्यते । विश्वश्चायं नरश्चेति, विश्वेषां वायं नरः, विश्वे वा नरा अस्येति विश्वानरः परमात्मा, सर्वात्मत्वात् । विश्वानर एव वैश्वानरः । तद्धितोऽनन्यार्थः राक्षसवायसादिवत् । अग्निशब्दोऽप्यग्रणीत्वादियोगाश्रयणेन परमात्मविषय एव भविष्यति । गार्हपत्यादिकल्पनं प्राणाहु-

ब्रूमः—

**ज्योतिरुपक्रमा तु । धीय एके ॥९॥**

परमेश्वरादुत्पन्ना ज्योतिःप्रमुखा तेजोबन्नलक्षणा चतुर्विधस्य भूतग्रा-य प्रकृतिभूतेयमजा प्रतिपत्तव्या । तुशब्दोऽवधारणार्थः । भूतत्रय क्ष-णैवेयमजा विज्ञेया न गुणत्रयलक्षणा । कस्मात् । तथाह्येके शाखिनस्तेजो-बन्नानां परमेश्वरादुत्पत्तिमाम्नाय तेषामेव रोहितादिरूपतामामनन्ति—'यद-ग्ने रोहितं रूपं तेज स्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य' इति । तान्ये-वेह तेजोबन्नानि प्रत्यभिज्ञायन्ते रोहितादिशब्द ामान्यात् । रोहितादीनां च शब्दानां रूपविशेषेषु मुख्यत्वाद्भाक्तत्वाच्च गुणविषयत्वस्य । असंदिग्धेन च संदिग्धस्य निगमनं न्याय्यं मन्यन्ते । तथेहापि "ब्रह्मवादिनो वदन्ति । किं-कारणं ब्रह्म" इत्युपक्रम्य "ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स गु-णैर्निगूढाम्" इति पारमेश्वर्याः शक्तेः मस्तजगद्विधायिन्या वाक्योपक्रमेऽ-मात् । वाक्यशेषेऽपि "मायां तु प्रकृतिं विद्यान्मायिनं महेश्वरम्" इति "यो योनिं योनिमधितिष्ठत्येकः" इति च तस्या एवावगमान्न स्वतंत्रा काचित्प्रकृतिः प्रधानं नामाजामंत्रेणाम्नायते इति शक्यते ्तुम् । प्रकर-णात्तु सैव दैवी शक्तिरव्याकृतनामरूपा नामरूपयोः प्रागवस्था अनेनापि मंत्रेणाम्नायत इत्युच्यते। तस्याश्च स्वविकारविषयेण त्रैरूप्येण त्रैरूप्यमुक्तम्॥९॥

कथं पुनस्तेजोबन्नात्मना त्रैरूप्येण त्रिरूपाजा प्रतिपत्तुं शक्यते । या-व । न तावत्तेजोबन्नेष्वजाकृतिरस्ति । नच तेजोबन्नानां जातिश्रवणादजाति-निमित्तोऽप्यजाशब्दः संभवतीति । अत उत्तरं पठति—

**कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥१०॥**

नायमजाकृतिनिमित्तोऽजाशब्दः । नापि यौगिकः । किं तर्हि कल्प-नोपदेशोऽयम् । अजारूपकक्लृप्तिस्तेजोबन्नलक्षणायाश्चराचरयोनेरुपदिश्यते । ाहि लोके यदृच्छया काचिदजा रोहि शुक्लकृष्णवर्णा स्याद्बहुबर्करा रू-पबर्करा च, ं च कश्चिदजो जुषमाणोऽनुशयीत, कश्चिच्चैनां भुक्तभो ं ात्, एवमियमपि तेजोबन्न क्षणा भूतप्रकृतिस्त्रिवर्णा बहु रूपं चराचर-क्षणं विकारजातं जनयति, अविदुषा च क्षेत्रज्ञेनोपभुज्यते विदुषा च परि-त्यज्यत इति । नचेदमाशंकितव्यमेकः क्षेत्रज्ञोऽनुशेतेऽन्यो ज ातीत्यतः

क्षेत्रज्ञभेदः पारमार्थिकः परेषामिष्टः प्राप्नोतीति । नह्ययं क्षेत्रज्ञभेदप्रतिपिपादयिषा किंतु बंधमोक्षव्यवस्थाप्रतिपिपादयिषा एवैषा । प्रसिद्धं तु भेदमनूद्य बंधमोक्षव्यवस्था प्रतिपाद्यते । भेदस्तूपाधिनिमित्तो मिथ्याज्ञानकल्पितो न पारमार्थिकः । 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा' इत्यादिश्रुतिभ्यः । मध्वादिवत् । यथा आदित्यस्यामधुनो मधुत्वम् [छां. .१], वाचश्चाधेनोर्धेनुत्वम् [बृ.५.८], द्युलोकादीनां चानग्नीनामग्नित्वम् [बृ.८.२.९] इत्येवंजातीयकं कल्प्यते, एवमिदमनजाया अजात्वं कल्प्यत इत्यर्थः । तस्मादविरोधस्तेजोबन्नेष्वजाशब्दप्रयोगस्य ॥१०॥

**३ संख्योपसंग्रहाधिकरणम् । सू० ११–१३ ।**

**न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥११॥**

एवं परिहृतेऽप्यजामंत्रे पुनरन्यस्मान्मंत्रात्सांख्यः प्रत्यवतिष्ठते । 'यस्मिन्पंच पंचजना आकाशश्च प्रतिष्ठितः । तमेव मन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतम्' इति । अस्मिन्मंत्रे पंच पंचजना इति पंचसंख्याविषयाऽपरा पंचसंख्या श्रूयते पंचशब्दद्वयदर्शनात् । त एते पंचपंचकाः पंचविंशतिः संपद्यन्ते । तथा पंचविंशतिसंख्यया यावन्तः संख्येया आकांक्ष्यन्ते तावन्त्येव च तत्त्वानि सांख्यैः संख्यायन्ते— "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः" इति । तया श्रुतिप्रसिद्धया पंचविंशतिसंख्यया तेषां स्मृतिप्रसिद्धानां पंचविंशतित्वानामुपसंग्रहात्प्राप्तं पुनः श्रुतिमत्त्वमेव प्रधानादीनाम् ॥

अतो ब्रूमः— न संख्योपसंग्रहादपि प्रधानादीनां श्रुतिमत्त्वं प्रत्याशा कर्तव्या । कस्मात् । नानाभावात् । नाना ह्येतानि पंचविंशतिस्तत्त्वानि । नैषां पंचशः पंचशः साधारणो धर्मोऽस्ति, येन पंचविंशतेरन्तराले पराः पंच पंच संख्या निविशेरन् । नह्येकनिबंधनमंतरेण नानाभूतेषु द्वित्वादिकाः संख्या निविशन्ते । अथोच्येत–पंचविंशतिसंख्यैवेयमवयवद्वारेण लक्ष्यते, यथा "पंच सप्त च वर्षाणि न ववर्ष शतक्रतुः" इति द्वादशवार्षिकीमनावृष्टिं कथयन्ति तद्वदिति । तदपि नोपपद्यते । अयमेवास्मिन्पक्षे दोषो यल्लक्षणाश्रयणीया स्यात् । परश्चात्र पंचशब्दो जनशब्देन समस्तः पंचजना इति, पारिभाषिकेण स्वरेणैकपदत्वनिश्चयात् । प्रयोगान्तरे च "पंचानां त्वा पंचजनानाम्"

इत्यैकपद्यैकस्वर्यैकविभक्तिकत्वावगमात् । मस्तत्वाच्च न वीप्सा पंच पंचेति । नच पंचकद्वयग्रहणं पंच पंचेति । नच पंच ख्याया एकस्याः पंचसंख्यया परया विशेषणं पंच पंचका इति । उपसर्जनस्य विशेषणेनासंयोगात् । नन्वापन्नपंचसंख्याका जना एव पुनः पंचसंख्यया विशेष्यमाणाः पंचविंशतिः प्रत्येष्यन्ते । यथा पंच पंचपूल्य इति पंचविंशतिपूलाः प्रतीयन्ते तद्वत् । नेति ब्रूमः । युक्तं यत्पंचपूलीशब्दस्य समाहाराभिप्रायत्वात्कतीति सत्यां भेदाकांक्षायां पंच पंचपूल्य इति विशेषणम् । इह तु पंच जना इत्यादित एव भेदोपादानात्कतीत्यसत्यां भेदाकांक्षायां न पंच पंचजना इति विशेषणं भवेत् । भवदपीदं विशेषणं पंचसंख्याया एव भवेत्, तत्र चोक्तो दोषः । तस्मात्पंच पंचजना इति न पंचविंशतितत्त्वाभिप्रायम् । अतिरेकाच्च न पंचविंशतितत्त्वाभिप्रायम् । अतिरेको हि भवत्यात्माकाशाभ्यां पंचविंशतिसंख्यायाः । आत्मा तावदिह प्रतिष्ठां प्रत्याधारत्वेन निर्दिष्टः । यस्मिन्निति सप्तमीसूचितस्य 'तमेव मन्य आत्मानम्' इत्यात्मत्वेनानुकर्षणात् । आत्मा च चेतनः पुरुषः । स च पंचविंशतावन्तर्गत एवेति न तस्यैवाधारत्वमाधेयत्वं च युज्येत । अर्थान्तरपरिग्रहे वा तत्त्वसंख्यातिरेकः सिद्धान्तविरुद्धः प्रसज्येत । तथा 'आकाशश्च प्रतिष्ठितः' इत्याकाशस्यापि पंचविंशतावंतर्गतस्य न पृथगुपादानं न्याय्यम् । अर्थान्तरपरिग्रहे चोक्तं दूषणम् । कथं च संख्यामात्रश्रवणे सत्यश्रुतानां पंचविंशतितत्त्वानामुपसंग्रहः प्रतीयेत ? जनशब्दस्य तत्त्वेष्वरूढत्वात् । अर्थान्तरोपसंग्रहेऽपि संख्योपपत्तेः । कथं तर्हि पंच पंचजना इति । उच्यते— "दिक्संख्ये संज्ञायाम्" इति विशेषणस्मरणात्संज्ञायामेव पंचशब्दस्य जनशब्देन समासः । ततश्च रूढत्वाभिप्रायेणैव केचित्पंचजना नाम विवक्ष्यन्ते, न सांख्यतत्त्वाभिप्रायेण । ते कतीत्यस्यामाकांक्षायां पुनः पंचेति प्रयुज्यते । पंचजना नाम ये केचित्ते च पंचैवेत्यर्थः । सप्तर्षयः सप्तेति यथा ॥११॥

के पुनस्ते पंचजना नामेति, तदुच्यते—

**प्राणादयो वाक्यशेषात् ॥१२॥**

'यस्मिन्पंच पंचजनाः' इत्यत उत्तरस्मिन्मंत्रे ब्रह्मस्वरूपनिरूपणाय प्राणादयः पंच निर्दिष्टाः— 'प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रो-

त्रमन्नस्यान्नं मन गे ये मनो विदुः' इति । तेऽत्र वाक्यशेषगताः संनिधानात्पंचजना विवक्ष्यन्ते । कथं पुनः प्राणादिषु जनशब्दप्रयोगः ? तत्त्वेषु वा कथं जनशब्दप्रयोगः ? समाने तु प्रसिद्ध्यतिक्रमे वाक्यशेषवशात्प्राणादय एव ग्रहीतव्या भवन्ति । जनसंबंधाच्च प्राणादयो जनशब्दभाजो भवन्ति । जनवचनश्च पुरुषशब्दः प्राणेषु प्रयुक्तः 'ते वा एते पंच ब्रह्मपुरुषाः' इत्यत्र । 'प्राणो ह पिता प्राणो ह माता' इत्यादि च ब्राह्मणम् । समासबलाच्च समुदायस्य रूढत्वमविरुद्धम् । कथं पुनरसति प्रथमप्रयोगे रूढिः शक्याश्रयितुम् । शक्योद्भिदादिवदित्याह । प्रसिद्धार्थसंनिधाने ह्यप्रसिद्धार्थः शब्दः प्रयुज्यमानः समभिव्याहारात्तद्विषयो नियम्यते, यथा 'उद्भिदा यजेत' 'यूपं छिनत्ति' 'वेदिं करोति' इति, तथायमपि पंचजनशब्दः समासान्वाख्यानादवगतसंज्ञाभावः संज्ञाकांक्षी वाक्यशेषसमभिव्याहृतेषु प्राणादिषु वर्तिष्यते । कैश्चित्तु देवाः पितरो गंधर्वा असुरा रक्षांसि च पंच पंचजना व्याख्याताः । अन्यैश्च चत्वारो वर्णा निषादपंचमाः परिगृहीताः । क्वचिच्च "यत्पांचजन्यया विशा" इति प्रजापरः प्रयोगः पंचजनशब्दस्य दृश्यते । तत्परिग्रहेऽपीह न कश्चिद्विरोधः । आचार्यस्तु न पंचविंशतेस्तत्त्वानामिह प्रतीतिरस्तीत्येवंपरतया 'प्राणादयो वाक्यशेषात्' इति जगाद ॥१२॥

भवेयुस्तावत्प्राणादयः पंचजना माध्यंदिनानां येऽन्नं प्राणादिष्वामनन्ति । काण्वानां तु कथं प्राणादयः पंचजना भवेयुर्येऽन्नं प्राणादिषु नामनन्तीति । अत उत्तरं पठति—

ज्योतिषैकेषामसत्यन्ने ॥१३॥

असत्यपि काण्वानामन्ने ज्योतिषा तेषां पंचसंख्या पूर्येत । तेऽपि हि 'यस्मिन्पंच पंचजनाः' इत्यतः पूर्वस्मिन्मंत्रे ब्रह्मस्वरूपनिरूपणायैव ज्योतिरधीयते— 'तद्देवा ज्योतिषां ज्योतिः' इति । कथं पुनरुभयेषामपि तुल्यवदिदं ज्योतिः पठ्यमानं समानमंत्रगतया पंचसंख्यया केषांचित् गृह्यते केषांचिन्नेति । अपेक्षाभेदादित्याह । माध्यंदिनानां हि समानमंत्रपठितप्राणादिपंचजनलाभान्नास्मिन्मंत्रान्तरपठिते ज्योतिष्यपेक्षा भवति । तदलाभात्तु काण्वानां भवत्यपेक्षा । अपेक्षाभेदाच्च समानेऽपि मंत्रे ज्योतिषो ग्रहणाग्रहणे । यथा समानेऽप्यतिरात्रे वचनभेदात्षोडशिनो ग्रहणाग्रहणे तद्वत् । तदेवं न

तावत् श्रुतिप्रसिद्धिः काचित्प्रधानविषयास्ति। स्मृतिन्यायप्रसिद्धी तु परिह-रिष्येते ॥१३॥

४ कारणत्वाधिकरणम्। सू० १४–१५।

**कारणत्वेन च दिषु यथा० पदिष्टोक्तेः ॥१४॥**

प्रतिपादितं ब्रह्मणो लक्षणम्। प्रतिपादितं च ब्रह्मविषयं गति ा-मान्यं वेदान्तवाक्यानाम्। प्रतिपादितं च प्रधानस्याशब्दत्व । तत्रेदमप-रमाशंक्यते— न जन्मादिकारणत्वं ब्रह्मणो ब्रह्मविषयं वा गतिसामान्यं वेदान्तवाक्यानां प्रतिपादयितुं शक्यम्। कस्मात्? विगानदर्शनात्। प्रति वेदान्तं ह्यन्यान्या सृष्टिरुपलभ्यते क्रमादिवैचित्र्यात्। तथाहि— क्वचित् 'आत्मन आकाशः संभूतः' इत्याकाशादिका सृष्टि रम्नायते। क्वचित्तेजआ-दिका— 'तत्तेजोऽसृजत' इति। क्वचित्प्राणादिका— 'स प्राण सृजत प्राणाच्छ्रद्धाम्' इति क्वचिदक्रमेणैव लोकानामुत्पत्तिराम्नायते— 'स इमाँ-ल्लोकानसृजत। अंभो मरीचीर्मरमापः' इति। तथा क्वचिद त्पूर्विका सृ ः पठ्यते—'असद्वा इदमग्र आसीत्ततो वै सदजायत' इति। 'असदेवेद ग्र आसीत्तत्सदासीत्तत्समभवत्' इति च। क्वचिदसद्वादनिराकरणेन सत्पूर्विका प्रक्रिया प्रतिज्ञायते— 'तद्धैक आहुरसदेवेदमग्र आसीत्' इत्युपक्रम्य 'कु-तस्तु खलु सोम्यैवं स्यादिति होवाच कथमसतः सज्जायेतेति सत्त्वेव ोम्ये-दमग्र आसीत्' इति। क्वचित्स्वयंकर्तृकैव व्याक्रिया जग ो निगद्यते— 'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियत' इति। एवमनेकधा विप्रतिपत्तेर्वस्तुनि च विकल्पस्यानुपपत्तेर्न वेदान्तवाक्यानां जगत्कारणावधा-रणपरता न्याय्या। स्मृतिन्यायप्रसिद्धिभ्यां तु कारणान्तरपरिग्रहो न्याय्यः। इति एवं प्राप्ते ब्रूमः— त्यपि प्रतिवेदान्तं सृज्यमानेष्वाकाशादिषु क्रमा-दिद्वारके विगाने न स्रष्टरि किंचिद्विगानमस्ति। कुतः। यथाव्यपदि ोक्तेः। यथाभूतो ह्येकस्मिन्वेदान्ते र्वज्ञः सर्वेश्वरः र्वात्मैकोऽद्वितीयः कारणत्वेन व्यपदिष्टः, थाभूत एव वेदान्तान्तरेष्वपि व्यपदिश्यते। तद्यथा— ' त्यं ज्ञानमनंतं ब्रह्म' इति। अत्र तावज्ज्ञानशब्देन परेण तद्विषयेण काम-यितृत्ववचनेन चेतनं ब्रह्म न्यरूपयदपरप्रयोज्यत्वेनेश्वरं कारणमब्रवीत्। त-द्विषयेणैव परेणात्मशब्देन शरीरादिकोशपरंपरया चान्तरनुप्रवेशनेन र्वेषां

अंतः प्रत्यगात्मानं निरधारयत्। 'बहु स्यां प्रजायेय' इति चात्मविषयेण बहुभवनानुशंसनेन ृज्यमानानां विकाराणां स्रष्टुरभेदमभाषत। तथा 'इदं सर्वमसृजत। यदिदं किंच' इति समस्तजगत्सृष्टिनिर्देशेन प्राक्सृष्टेरद्वितीयं स्रष्टारमाचष्टे। तदत्र यल्लक्षणं ब्रह्म कारणत्वेन विज्ञा तल्लक्षणमेवान्यत्रापि विज्ञायते— 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' 'तदैक्षत बहु स्यां प्रजायेयेति। तत्तेजोऽसृजत' इति। तथा 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत्। स ईक्षत लोकान्नु सृजै' इति च। एवंजातीयकस्य कारणस्वरूपनिरूपणपरस्य वाक्यजातस्य प्रतिवेदान्तमविगीतार्थत्वात्। कार्यविषयं तु विगानं दृश्यते क्वचिदाकाशादिका सृष्टिः क्वचित्तेजआदिकेत्येवंजातीयकम्। नच कार्यविषयेण विगानेन कारणमपि ब्रह्म सर्ववेदान्तेष्वविगीतं अधिगम्यमानमविवक्षितं भवितुमर्हतीति शक्यते वक्तुम्। अतिप्रसंगात्। समाधास्यति चाचार्यः कार्यविषयमपि विगानं 'न वियदश्रुतेः' [२.३.१] इत्यारभ्य। भवेदपि कार्यस्य विगीतत्वमप्रतिपाद्यत्वात्। नह्ययं सृष्ट्यादिप्रपंचः प्रतिपिपादयिषितः। नहि तत्प्रतिबद्धः कश्चित्पुरुषार्थो दृश्यते श्रूयते वा। नच कल्पयितुं शक्यते, उपक्रमोपसंहाराभ्यां तत्र तत्र ब्रह्मविषयैर्वाक्यैः साकमेकवाक्यतया गम्यमानत्वात्। दर्शयति च सृष्ट्यादिप्रपंचस्य ब्रह्मप्रतिपत्त्यर्थतां— 'अन्नेन सोम्य शुंगेनापो मूलमन्विच्छाद्भिः सोम्य शुंगेन तेजो मूलमन्विच्छ तेजसा सोम्य शुंगेन सन्मूलमन्विच्छ' इति। मृदादिदृष्टान्तैश्च कार्यस्य कारणेनाभेदं वदितुं सृष्ट्यादिप्रपंचः श्राव्यत इति गम्यते। तथाच संप्रदायविदो वदन्ति— ''मृल्लोहविस्फुलिंगाद्यैः सृ र्या चोदिता न्यथा। उपायः सोऽवताराय नास्ति भेदः कथंचन॥'' इति। ब्रह्मप्रतिपत्तिप्रतिबद्धं तु फलं श्रूयते— 'ब्रह्मविदाप्नोति परम्' 'तरति शोकमात्मवित्' ''तमेव विदित्वाऽतिमृत्युमेति'' इति। प्रत्यक्षावगमं चेदं फलम्। 'तत्त्वमसि' इत्यसंसार्यात्मत्वप्रतिपत्तौ सत्यां संसार्यात्मत्वव्यावृत्तेः ॥१४॥

यत्पुनः कारणविषयं विगानं दर्शितं— 'असद्वा इदमग्र आसीत्' इत्यादि, तत्परिहर्तव्यम्। अत्रोच्यते—

**समाकर्षात् ॥१५॥**

'असद्वा इदमग्र आसीत्' इति नात्रासन्निरात्मकं कारणत्वेन भा

ते । यतः 'असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुः' इत्य द्वादापवादेनास्तित्वलक्षणं ब्रह्मान्नमयादिकोशपरंपरया प्रत्यगात्मानं निर्धार्य 'सोऽकामयत' इति तमेव प्रकृतं समाकृष्य सप्रपंचां सृष्टिं तस्माच्छ्रावयित्वा 'तत्सत्यमित्याचक्षते' इति चोपसंहृत्य 'तदप्येष श्लोको भवति' इति तस्मिन्नेव प्रकृतेऽर्थे श्लोकमिममुदाहरति— 'असद्वा इदमग्र आसीत्' इति । यदि त्वसन्निरात्मकमस्मिन् श्लोकेऽभिप्रेयेत ततोऽन्यसमाकर्षणेऽन्यस्योदाहरणादसंबद्धं वाक्यमापद्येत । तस्मान्नामरूपव्याकृतवस्तुविषयः प्रायेण सच्छब्दः प्रसिद्ध इति तद्व्याकरणाभावापेक्षया प्रागुत्पत्तेः सदेव ब्रह्मासदिवासीदित्युपचर्यते । एषैव 'असदेवेदमग्र आसीत्' इत्यत्रापि योजना । 'तत्सदासीत्' इति समाकर्षणात् । अत्यंताभावाभ्युपगमे हि तत्सदासीदिति किं समाकृष्येत? 'तद्धैक आहुरसदेवेदमग्र आसीत्' इत्यत्रापि न श्रुत्यंतराभिप्रायेणायमेकीयमतोपन्यासः । क्रियायामिव वस्तुनि विकल्पस्यासंभवात् । तस्मात् श्रुतिपरिगृहीतसत्पक्षदार्ढ्यायैवायं मंदमतिपरिकल्पितस्य असत्पक्षस्योपन्यस्य निरास इति द्रष्टव्यम् । 'तद्धेदं तर्ह्यव्याकृतमासीत्' इत्यत्रापि न निरध्यक्षस्य जगतो व्याकरणं कथ्यते, 'स एष इह प्रविष्ट आनखाग्रेभ्यः' इत्यध्यक्षस्य व्याकृतकार्यानुप्रवेशित्वेन समाकर्षात् । निरध्यक्षे व्याकरणाभ्युपगमे ह्यनंतरेण प्रकृतावलंबिना स इत्यनेन सर्वनाम्ना कः कार्यानुप्रवेशित्वेन समाकृष्येत? चेतनस्य चायमात्मनः शरीरेऽनुप्रवेशः श्रूयते । अनुप्रविष्टस्य चेतनत्वश्रवणात् 'पश्यंश्चक्षुः श्रृण्वञ्श्रोत्रं मन्वानो मनः' इति । अपिच यादृशमिदमद्यत्वे नामरूपाभ्यां व्याक्रियमाणं जगत साध्यक्षं व्याक्रियते एवमादिसर्गेऽपीति गम्यते । दृष्टविपरीतकल्पनानुपपत्तेः । श्रुत्यंतरमपि 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' इति साध्यक्षामेव जगतो व्याक्रियां दर्शयति । व्याक्रियत इत्यपि कर्मकर्तरि लकारः सत्येव परमेश्वरे व्याकर्तरि सौकर्यमपेक्ष्य द्रष्टव्यः । यथा लूयते केदारः स्वयमेवेति सत्येव पूर्णके लवितरि । यद्वा कर्मण्येवैष लकारोऽर्थाक्षिप्तं कर्त्रंतरमपेक्ष्य द्रष्टव्यः । यथा गम्यते ग्राम इति ॥१५॥

५ [बाला]क्यधिकरण[म्] । सू० १६–१८ ।

जगद्वाचित्वात् ॥ ६॥

कौषीतकिब्राह्मणे बालाक्यजातशत्रुसंवादे श्रूयते— "यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म स वै वेदितव्यः" इति । तत्र किं जीवो वेदितव्यत्वेनोपदिश्यते उत मुख्यः प्राण उत परमात्मेति विषयः । किं तावत्प्राप्तम् ? प्राण इति । कुतः । 'यस्य वैतत्कर्म' इति श्रवणात् । परिस्पंदलक्षणस्य च कर्मणः प्राणाश्रयत्वात् । वाक्यशेषे च 'अथास्मिन्प्राण एवैकधा भवति' इति प्राणशब्ददर्शनात् । प्राणशब्दस्य च मुख्ये प्राणे प्रसिद्धत्वात् । ये चैते पुरस्ताद्बालाकिना 'आदित्ये पुरुषश्चंद्रमसि पुरुषः' इत्येवमादयः पुरुषा निर्दिष्टास्तेषामपि भवति प्राणः कर्ता प्राणावस्थाविशेषत्वादादित्यादिदेवतात्मनाम् । 'कतम एको देव इति प्राण इति स ब्रह्म त्यदित्याचक्षते' इति श्रुत्यंतरप्रसिद्धेः । जीवो वायमिह वेदितव्यतयोपदिश्यते । तस्यापि धर्माधर्मलक्षणं कर्म शक्यते श्रावयितुम् 'यस्य वैतत्कर्म' इति । ोऽपि भोक्तृत्वाद्भोगोपकरणभूतानामेतेषां पुरुषाणां कर्तोपपद्यते । वाक्यशेषे च जीवलिंगमवगम्यते । यत्कारणं वेदितव्यतयोपन्यस्तस्य पुरुषाणां कर्तुर्वेदनायोपेतं बालाकिं प्रति बुबोधयिषुरजातशत्रुः सुप्तं पुरुषमामंत्र्य आमंत्रणशब्दाश्रवणात्प्राणादीनां अभोक्तृत्वं प्रतिबोध्य य घातोत्थापनात्प्राणादिव्यतिरिक्तं जीवं भोक्तारं प्रतिबोधयति । तथा परस्तादपि जीवलिंगमवगम्यते— "तद्यथा श्रेष्ठी स्वैर्भुंक्ते यथा वा स्वाः श्रेष्ठिनं भुंजन्त्येवमेवैष प्रज्ञात्मैतैरात्मभिर्भुंक्ते एवमेवैत आत्मानः एतमात्मानं भुंजन्ति" इति । प्राणभृत्त्वाच्च जीवस्योपपन्नं प्राणशब्दत्वम् । तस्माज्जीवमुख्यप्राणयोरन्यतर इह ग्रहणीयो, न परमेश्वरः, तल्लिंगानवगमादिति । एवं प्राप्ते ब्रूमः परमेश्वर एवायमेतेषां पुरुषाणां कर्ता स्यात् । कस्मात् ? उपक्रमसामर्थ्यात् । इह हि बा ाकिरजातशत्रुणा ह 'ब्रह्म ते ब्रवाणि' इति संवदितुमुपचक्रमे । स च कतिचिदादित्याद्यधिकरणान्पुरुषानमुख्यब्रह्मदृष्टिभाज उक्त्वा तूष्णीं बभूव । तमजातशत्रुः 'मृषा वै खलु मा संवदिष्ठा ब्रह्म ते ब्रवाणि' इत्यमुख्यब्रह्मादितयापोद्य तत्कर्तारमन्यं वेदितव्यतयोपचिक्षेप । यदि सोऽप्यमुख्यब्रह्मदृष्टिभाक् स्यादुपक्रमो ध्येत । तस्मात्परमेश्वर एवायं भवितुमर्हति । कर्तृत्वं चैतेषां पुरुषाणां न परमेश्वरादन्यस्य स्वातंत्र्येणावकल्पते । 'यस्य वैतत् कर्म' इत्यपि नायं परिस्पंद णस्य धर्माधर्मलक्षणस्य वा कर्मणो निर्दे ः ।

तयोरन्यतरस्याप्यप्रकृतत्वात् । असंशब्दितत्वाच्च । नापि पुरुषाणामयं निर्देशः । एतेषां पुरुषाणां कर्तेत्येव तेषां निर्दिष्टत्वात् । लिंगवचनविगानाच्च नापि पुरुषाविषयस्य करोत्यर्थस्य क्रियाफलस्य वायं निर्देशः, कर्तृशब्देनैव तयोरुपात्तत्वात् । पारिशेष्यात्प्रत्यक्षसंनिहितं जगत्सर्वनाम्नैतच्छब्देन निर्दिश्यते । क्रियत इति च तदेव जगत्कर्म । ननु जगदप्यप्रकृतमसंशब्दितं च । सत्यमेतत् । तथाप्यसति विशेषोपादाने साधारणेनार्थेन संनिधानेन संनिहितवस्तुमात्रस्यायं निर्देश इति गम्यते, न विशिष्टस्य कस्यचित् । विशेषसंनिधानाभावात् । पूर्वत्र च जगदेकदेशभूतानां पुरुषाणां विशेषोपादानादविशेषितं जगदेवेहोपादीयत इति गम्यते । एतदुक्तं भवति— य एतेषां पुरुषाणां जगदेकदेशभूतानां कर्ता, किमनेन विशेषेण, यस्य वा कृत्स्नं एव जगदविशेषितं कर्मेति । वाशब्द एकदेशावच्छिन्नकर्तृत्वव्यावृत्त्यर्थः । ये बालाकिना ब्रह्मत्वाभिमताः पुरुषाः कीर्तितास्तेषामब्रह्मत्वख्यापनाय विशेषोपादानम् । एवं ब्राह्मणपरिव्राजकन्यायेन सामान्यविशेषाभ्यां जगतः कर्ता वेदितव्यतयोपदिश्यते । परमेश्वरश्च सर्वजगतः कर्ता सर्ववेदान्तेषु अवधारितः ॥१६॥

जीवमुख्यप्राणलिंगान्नेति चेत्तद्व्याख्यातम् ॥१७॥

अथ यदुक्तं वाक्यशेषगताज्जीवलिंगान्मुख्यप्राणलिंगाच्च तयोरेव अन्यतरस्येह ग्रहणं न्याय्यं न परमेश्वरस्येति । तत्परिहर्तव्यम् । यत्रोच्यते परिहृतं चैतत् । 'नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्' [१.१.३१] इत्यत्र । त्रिविधं ह्यत्रोपासनमेवं सति प्रसज्येत जीवोपासनं मुख्यप्राणोपासनं ब्रह्मोपासनं चेति । न चैतन्न्याय्यम् । उपक्रमोपसंहाराभ्यां हि ब्रह्मविषयत्वमस्य वाक्यस्यावगम्यते । तत्रोपक्रमस्य तावद्ब्रह्मविषयत्वं दर्शितम् । उपसंहारस्यापि निरतिशयफलश्रवणात् ब्रह्मविषयत्वं दृश्यते— 'सर्वान्पाप्मनोऽपहत्य सर्वेषां च भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति य एवं वेद' इति । नन्वेवं सति प्रतर्दनवाक्यनिर्णयेनैव इदमपि वाक्यं निर्णीयेत । न निर्णीयते । "यस्य वैतत्कर्म" इत्यस्य ब्रह्मविषयत्वेन तत्रानिर्धारितत्वात् । तस्मादत्र जीवमुख्यप्राणशंका पुनरुत्पद्यमाना निवर्त्यते । प्राणशब्दोऽपि ब्रह्मविषयो दृष्टः 'प्राणबंधनं हि सोम्य मनः' इत्यत्र । जीवलिंगमप्युपक्रमोपसंहा-

रयोः ब्रह्मविषयत्वादभेदाभिप्रायेण योजयितव्यम् ॥१७॥

**अन्यार्थं जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १८॥**

अपिच नैवात्र विवदितव्यं जीवप्रधानं वेदं वाक्यं स्याद्ब्रह्मप्रधानं वेति । यतोऽन्यार्थं जीवपरामर्शं ब्रह्मप्रतिपत्त्यर्थमस्मिन्वाक्ये जैमिनिराचार्यो मन्यते । कस्मात् ? प्रश्नव्याख्यानाभ्याम् । प्रश्नस्तावत्सुप्तपुरुषप्रतिबोधनेन प्राणादिव्यतिरिक्ते जीवे प्रतिबोधिते पुनर्जीवव्यतिरिक्तविषयो दृश्यते– 'क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्व वा एतदभूत्कुत एतदागात्" इति । प्रतिवचनमपि 'यदा सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन्प्राण एवैकधा भवति' इत्यादि, "एतस्मादात्मनः सर्वे प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः" इति च । सुषुप्तिकाले च परेण ब्रह्मणा जीव एकतां गच्छति । परस्माच्च ब्रह्मणः प्राणादिकं जगज्जायत इति वेदान्तमर्यादा । तस्माद्यत्रास्य जीवस्य निःसंबोधतास्वस्थतारूपः स्वापः उपाधिजनितविशेषविज्ञानरहितं स्वरूपं, यतस्तद्भ्रंशरूपमागमनं, सोऽत्र परमात्मा वेदितव्यतया श्रावित इति गम्यते । अपिचैवमेके शाखिनो वाजसनेयिनोऽस्मिन्नेव बालाक्यजातशत्रुसंवादे स्पष्टं विज्ञानमयशब्देन जीवमाम्नाय तद्व्यतिरिक्तं परमात्मानमामनन्ति— 'य एष विज्ञानमयः पुरुषः क्वैष तदाभूत्कुत एतदागात्' इति प्रश्ने । प्रतिवचनेऽपि 'य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते' इति । आकाशशब्दश्च परमात्मनि प्रयुक्तः 'दहरोऽस्मिन्नंतराकाशः' इत्यत्र । ' र्वे एत आत्मानो व्युच्चरन्ति' इति चोपाधिमतामात्मनामन्यतो व्युच्चरणमामनन्तः परमात्मानमेव कारणत्वेनामनन्तीति गम्यते । प्राणानिराकरणस्यापि सुषुप्तपुरुषोत्थापनेन प्राणादिव्यतिरिक्तोपदेशोऽभ्युच्चयः ॥१८॥

**६ वाक्यान्वय धिकरण । सू० १९–२२ ।**

**वाक्यान्वयात् ॥१९॥**

बृहदारण्यके मैत्रेयीब्राह्मणेऽधीयते— 'न वा अरे पत्युः कामाय' इत्युपक्रम्य 'न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवत्यात्मा वा अरे द्रष्टव्यः श्रोतव्यो मंतव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं र्वं विदितम्' इति । तत्रैतद्विचिकित्स्यते— किं विज्ञानात्मैवायं द्रष्टव्यश्रोतव्यत्वादिरूपेणोपदि-

श्यते आहोस्वित्परमात्मेति । कुतः पुनरेषा विचिकित्सा ? प्रियसंसूचितेनात्मना भोक्त्रोपक्रमाद्विज्ञानात्मोपदेश इति प्रतिभाति । तथात्मविज्ञानेन सर्वविज्ञानोपदेशात्परमात्मोपदेश इति । किं तावत्प्राप्तम् । विज्ञानात्मोपदेश इति । कस्मात् ? उपक्रमसामर्थ्यात् । पतिजायापुत्रवित्तादिकं हि भोग्यभूतं सर्वं जगदात्मार्थतया प्रियं भवतीति प्रियसंसूचितं भोक्तारमात्मानुपक्रम्य अनंतरमिदमात्मनो दर्शनाद्युपदिश्यमानं कस्यान्यस्यात्मनः स्यात् ? मध्येऽपि 'इदं महद्भूतमनंतमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय न्येवानुविनश्यति न प्रेत्य संज्ञास्ति' इति प्रकृतस्यैव महतो भूतस्य द्र व्यस्द भूतेभ्यः समुत्थानं विज्ञानात्मभावेन ब्रुवन्विज्ञानात्मन एवेदं द्रष्टव्यत्वं दर्शयाति । तथा 'विज्ञातारमरे केन विजानीयात्' इति कर्तृवचनेन शब्देनोपसंहरान्विज्ञानात्मानमेवेहोपदिष्टं दर्शयति । तस्मादात्मविज्ञानेन सर्वविज्ञानवचनं भोक्त्रर्थत्वाद्भोग्यजातस्य औपचारिकं द्रष्टव्यमिति । एवं प्राप्ते ब्रूमः— परमात्मोपदेश एवायम् । कस्मात् ? वाक्यान्वयात् । वाक्यं हीदं पौर्वापर्येणावेक्ष्यमाणं परमात्मानं प्रति अन्वित यवं लक्ष्यते । कथमिति, तदुपपाद्यते— 'अमृतत्वस्य तु नाशास्ति वित्तेन' इति याज्ञवल्क्यादुपश्रुत्य 'येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान्वेद तदेव मे ब्रूहि' इत्यमृतत्वमाशासानायै मैत्रेय्यै याज्ञवल्क्यः आत्मविज्ञानामिदमुपदिशति । नचान्यत्र परमात्मविज्ञानात् अमृतत्वमस्तीति श्रुतिस्मृतिवादा वदन्ति । तथा चात्मविज्ञानेन वेविज्ञानमुच्यमानं नान्यत्र परमकारणविज्ञानान्मुख्यमवकल्पते । नचैतदौपचारिकमाश्रयितुं शक्यं, यत्कारणमात्मविज्ञानेन सर्वविज्ञानं प्रतिज्ञायानंतरेण ग्रंथेन तदेवोपपादयति 'ब्रह्म तं परादाद्यो अन्यत्रात्मनो ब्रह्म वेद' इत्यादिना । यो हि ब्रह्मक्षत्रादिकं जगदात नोऽन्यत्र स्वातंत्र्येण लब्धसद्भावं पश्यति तं मिथ्यादर्शिनं तदेव मिथ्यादृष्टं ब्रह्मक्षत्रादिकं जगत्पराकरोतीति भेददृष्टिमपोद्य 'इदं सर्वं यदयमात्मा' इति सर्वस्य वस्तुजातस्य आत्माव्यतिरेकमवतारयति । दुंदुभ्यादिदृष्टान्तैश्च तमेवाव्यतिरे द्रढयति । 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः' इत्यादिना च प्रकृतस्यात्मनो नामरूपकर्मप्रपंचकारणतां व्याचक्षाणः परमात्मानमेवैनं गमयति । वैकायनप्रक्रियायामपि सविषयस्य सेन्द्रियस्य न्तःकरणस्य प्रपंचस्य एकायनं

अनंतरमबाह्यं कृत्स्नं प्रज्ञानघनं व्याचक्षाणः पर त्मानमेवैनं गमयति । स्मात्परमात्मन एवायं दर्शनाद्युपदेश इति गम्यते ॥१९॥

यत्पुनरुक्तं प्रियसंसूचितोपक्रमाद्विज्ञानात्मन एवायं दर्शनाद्युपदेश इति, अत्र ब्रूमः—

प्रतिज्ञासिद्धेर्लिंगमाश्मरथ्यः ॥२०॥

अस्त्यत्र प्रतिज्ञा 'आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवति' 'इदं सर्वं यदयमात्मा' इति च । तस्याः प्रतिज्ञायाः सिद्धिं सूचयत्येतल्लिंगं यत्प्रिय सूचितस्यात्मनो द्रष्टव्यत्वादिसंकीर्तनम् । यदि हि विज्ञानात्मा परमात्मनोऽन्यः स्यात्ततः परमात्मविज्ञानेऽपि विज्ञानात्मा न विज्ञायत इत्येकविज्ञानेन सर्वविज्ञानं यत्प्रतिज्ञातं तद्धीयेत । तस्मात्प्रतिज्ञासिद्ध्यर्थं विज्ञानात्मपरमात्मनोः अभेदांशेनोपक्रमणमित्याश्मरथ्य आचार्यो मन्यते ॥२०॥

उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥२१॥

विज्ञानात्मन एव देहेन्द्रियमनोबुद्धिसंघातोपाधि पर्कात् कलुषीभूतज्ञानध्यानादि धनानुष्ठानात्संप्रसन्नस्य देहादि घातादुत्क्रमिष्यतः परमात्मैक्योपपत्तेः इदमभेदेनोपक्रमणं इत्यौडुलोमिराचार्यो मन्यते । श्रुतिश्चैवं भवति— 'एष संप्रसादोऽस्माच्छरीरात् मुत्थाय परं ज्योतिरुप पद्य स्वेन रूपेणाभिनिष्पद्यते' इति । क्वचिच्च जीवाश्रयमपि नामरूपं नदीनिदर्शनेन पयति— 'यथा नद्यः स्यंदमानाः समुद्रेऽस्तं गच्छंति नामरूपे विहाय । था विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' इति । यथा लो नद्यः स्वाश्रयमेव नामरूपं विहाय मुद्रमुपयन्ति, एवं जीवोऽपि स्वाश्रयमेव मरूपं विहाय परं पुरुषमुपैतीति हि तत्रार्थः प्रतीयते दृष्टान्तदार्ष्टान्तिकयोर त्यतायै ॥२ ॥

अवस्थितेरिति का : ॥२२॥

अस्यैव परमात्मनोऽनेनापि विज्ञानात्मभावेनावस्थानात् उपपन्नमिद भेदेनोपक्रमणमिति काशकृत्स्न आचार्यो मन्यते । तथाच ब्राह्मणम्— 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' इत्येवंजातीयकं परस्यैवा नो जीवभावेनावस्था दर्शयति । मंत्रवर्णश्च— " र्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन्यदास्ते" इत्येवंजातीयकः । नच तेजः -

भृतीनां सृष्टौ जीवस्य पृथक्सृष्टिः श्रुता, येन परस्मादात नोऽन्यस्तद्विकारो जीवः स्यात्। काशकृत्स्नस्याचार्यस्य अविकृतः परमेश्वरो जीवो नान्य इति मतम्। आश्मरथ्यस्य तु यद्यपि जीवस्य परस्मादनन्यत्वमभिप्रेतं, थापि प्रतिज्ञासिद्धेरिति सापेक्षत्वाभिधानात्कार्यकारणभावः कियानप्यभिप्रेत इति गम्यते। औडुलोमिपक्षे पुनः स्पष्टमेवावस्थान्तरापेक्षौ भेदाभेदौ गम्येते। तत्र काशकृत्स्नीयं मतं श्रुत्यनु ारीति गम्यते, प्रतिपिपादयिषितार्थानुसारात् 'तत्त्वमसि' इत्यादिश्रुतिभ्यः। एवंच सति तज्ज्ञानादमृतत्वमवकल्पते। विकारात्मकत्वे हि जीवस्याभ्युपगम्यमाने विकारस्य प्रकृति बंधे प्रलयप्रसंगान्न तज्ज्ञानादमृतत्वमवकल्पेत। अतश्च स्वाश्रयस्य नामरूपस्यासंभवादुपाध्याश्रयं नामरूपं जीव उपचर्यते। अतएवोत्पत्तिरपि जीवस्य क्वचिदग्निविस्फुलिंगोदाहरणेन श्राव्यमाणोपाध्याश्रयैव वेदितव्या॥

यदप्युक्तं प्रकृतस्यैव महतो भूतस्य द्रष्टव्यस्य भूतेभ्यः समुत्थानं विज्ञानात्मभावेन दर्शयन्विज्ञानात्मन एवेदं द्रष्टव्यत्वं दर्शयतीति, तत्रापीयमेव त्रिसूत्री योजयितव्या। **'प्रतिज्ञासिद्धेर्लिंगमाश्मरथ्यः'**। इदमत्र प्रतिज्ञातम्— 'आत्मनि विदिते सर्वं विदितं भवति' 'इदं सर्वं यदयमात्मा' इति च। उपपादितं च, सर्वस्य नामरूपकर्मप्रपंचस्य एकप्रसवत्वात् एकप्रलयत्वाच्च दुंदुभ्यादिदृष्टान्तैश्च कार्यकारणयोः अव्यतिरेकप्रतिपादनात्। तस्या एव प्रतिज्ञायाः सिद्धिं सूचयत्येतल्लिंगं यन्महतो भूतस्य द्रष्टव्यस्य भूतेभ्यः समुत्थानं विज्ञानात्मभावेन कथितमित्याश्मरथ्य आचार्यो मन्यते। अभेदे हि त्येकविज्ञानेन र्वविज्ञानं प्रतिज्ञातमवकल्पत इति। **'मिष्यत एवंभावादित्यौ लोमिः'**। उत्क्रमिष्यतो विज्ञानात्मनो ज्ञानध्यानादि ामर्थ्यात्संप्र न्नस्य परेणात्मनैक्यसंभवादिदमभेदाभिधानं इत्यौडुलोमिराचार्यो मन्यते। **'अवस्थितेरिति काशकृत्स्नः'**। अस्यैव परमात्मनोऽनेनापि विनात्मभावेन अवस्थानादुपपन्नामिदं अभेदाभिधानमिति काशकृत्स्न आचार्यो मन्यते। ननूच्छेदाभिधानमेतत् 'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति' इति। कथमेतदभेदाभिधानम्? नैष दोषः। विशेषविज्ञानविनाशाभिप्रायमेतद्विनाशाभिधानं नात्मोच्छेदाभिप्रायम्। 'अत्रैव मा भगवानमूमुह प्रेत्य ज्ञास्ति' इति पर्यनुयुज्य स्वयमेव श्रुत्यार्था-

न्तरस्य दर्शितत्वात्— 'न वा अरेऽहं मोहं ब्रवीम्यविनाशी वा अरेऽयमा नुच्छित्तिधर्मा मात्रासंसर्गस्त्वस्य भवति' इति । एतदुक्तं भवति कूटस्थनित्य एवायं विज्ञानघन आत्मा नास्योच्छेदप्रसंगोऽस्ति । मात्राभिस्त्वस्य भूतेन्द्रियलक्षणाभिरविद्याकृताभिर गों विद्यया भवति । संसर्गाभावे च तत्कृतस्य विशेषविज्ञानस्याभावात् 'न प्रेत्य संज्ञास्ति' इत्युक्तामिति । यदप्युक्तं— 'विज्ञातारमरे केन विजानीयात्' इति कर्तृवचनेन शब्देनोपसंहाराद्विज्ञानात्मन एवेदं द्रष्टव्यमिति, तदपि काशकृत्स्नीयेनैव दर्शनेन परिहरणीयम् । अपिच 'यत्र हि द्वैतमिव भवति तादितर इतरं पश्यति' इत्यारभ्याविद्याविषये तस्यैव दर्शनादिलक्षणं विशेषविज्ञानं प्रपंच्य 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' इत्यादिना विद्याविषये तस्यैव दर्शनादिलक्षणस्य विशेषविज्ञान याभावमभिदधाति । पुनश्च विषयाभावेऽपि आत्मानं विजानीयात् इत्याशंक्य 'विज्ञातारमरे केन विजानीयात्' इत्याह । ततश्च विशेषविज्ञानाभावोपपादनपरत्वाद्वाक्यस्य विज्ञानधातुरेव केवलः सन्भूतपूर्वगत्या कर्तृवचनेन तृचा निर्दिष्ट इति गम्यते । दर्शितं पुरस्तात्काशकृत्स्नीयस्य पक्षस्य श्रुतिमत्त्वम् । अतश्च विज्ञानात्मपरमात्मनोः अविद्याप्रत्युपस्थापितनामरूपरचितदेहाद्युपाधिनिमित्तो भेदो, न पारमार्थिक इत्येषोऽर्थः सर्वैर्वेदान्तवादिभिरभ्युपगंतव्यः । 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' 'आत्मैवेदं सर्वम्' 'ब्रह्मैवेदं र्वम्' 'इदं सर्वं यदयमात्मा' 'नान्योऽतोऽस्ति द्रष्टा' 'नान्यदतोऽस्ति द्रष्टृ' इत्येवंरूपाभ्यः श्रुतिभ्यः । स्मृतिभ्यश्च "वासुदेवः सर्वमिति" "क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत" "समं र्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्" इत्येवंरूपाभ्यः । भेददर्शनापवादाच्च 'अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः' 'मृत्योः मृत्युमाप्नोति य इह नानेव पश्यति' इत्येवंजातीयकात् । 'स वा एष महान आत्माजरोऽमरोऽमृतोऽभयो ब्रह्म' इति चात्मनि र्वविक्रियाप्रतिषेधात् । अन्यथा च मु क्षूणां निरपवादविज्ञानानुपपत्तेः, सुनिश्चितार्थत्वानुपपत्तेश्च । निरपवादं हि विज्ञानं सर्वाकांक्षानिवर्तकमात्मविषयमिष्यते, 'वेदान्तविज्ञानसुनिश्चितार्थाः' इति च श्रुतेः । 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः' इति च । स्थितप्रज्ञलक्षणस्मृतेश्च । स्थिते च क्षेत्रज्ञपरमात्मैकत्वविषय सम्यग्दर्शने क्षेत्रज्ञः पर-

मात्मेति नाममात्रभेदात्, क्षेत्रज्ञोऽयं परमात्मनो भिन्नः, परमात्मायं क्षेत्रज्ञाद्भिन्न इत्येवंजातीयक आत्मभेदविषयो निर्बंधो निरर्थकः। एको यमात्मा नाममात्रभेदेन बहुधाभिधीयत इति। नहि 'सत्यं ज्ञानमनंतं ब्रह्म। यो वेद निहितं गुहायाम्' इति कांचिदेवैकां गुहामधिकृत्यैतदुक्तम्। नच ब्रह्मणोऽन्यो गुहायां निहितोऽस्ति, 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति स्रष्टुरेव प्रवेशश्रवणात्। ये तु निर्बंधं कुर्वन्ति ते वेदान्तार्थं बाधमानाः श्रेयोद्वारं म्यग्दर्शनमेव बाधन्ते। कृतकमनित्यं च मोक्षं कल्पयन्ति। न्यायेन च न संगच्छन्त इति ॥२२॥

प्र धिकरणम्। सू० २३–२७।

प्र तिश्च प्रतिज्ञादृष्टान्तानुपरोधा ॥२३॥

यथाभ्युदयहेतुत्वाद्धर्मो जिज्ञास्यः, एवं निःश्रेयसहेतुत्वाद्ब्रह्मापि जिज्ञास्यमित्युक्तम्। ब्रह्म च 'जन्माद्यस्य यतः' [१.१.२] इति लक्षितम्। तच्च लक्षणं घटरुचकादीनां मृत्सुवर्णादिवत्प्रकृतित्वे कुलालसुवर्णकारादिवन्निमित्तत्वे च समानमित्यतो भवति विमर्शः, किमात्मकं पुनर्ब्रह्मणः कारणत्वं स्यादिति। तत्र निमित्तकारणमेव तावत्केवलं स्यादिति प्रतिभाति। कस्मात्? ईक्षापूर्वककर्तृत्वश्रवणात्। ईक्षापूर्वकं हि ब्रह्मणः कर्तृत्वमवगम्यते 'स ईक्षांचक्रे' 'स प्राणमसृजत' इत्यादिश्रुतिभ्यः। ईक्षापूर्वकं च कर्तृत्वं निमित्तकारणेष्वेव कुलालादिषु दृष्टम्। अनेककारकपूर्विका च क्रियाफलसिद्धिर्लोके दृष्टा। स च न्याय आदिकर्तर्यपि युक्तः संक्रमयितुम्। ईश्वरत्वप्रसिद्धेश्च। ईश्वराणां हि राजवैवस्वतादीनां निमित्तकारणत्वमेव केवलं प्रतीयते। तद्वत्परमेश्वरस्यापि निमित्तकारणत्वमेव युक्तं प्रतिपत्तुम्। कार्यं चेदं जगत्सावयवमचेतनमशुद्धं च दृश्यते, कारणेनापि तस्य तादृशेनैव भवितव्यं, कार्यकारणयोः सारूप्यदर्शनात्। ब्रह्म च नैवंलक्षणमवगम्यते 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरंजनम्' इत्यादिश्रुतिभ्यः। पारिशेष्याद्ब्रह्मणोऽन्यदुपादानकारणमशुद्ध्यादिगुणकं स्मृतिप्रसिद्धमभ्युपगंतव्यम्। ब्रह्मकारणत्वश्रुतेर्निमित्तत्वमात्रे पर्यव नादिति। एवं प्राप्ते ब्रूमः— प्रकृतिश्चोपादानकारणं च ब्रह्माभ्युपगंतव्यं निमित्तकारणं च। न केवलं निमित्तकारणमेव। कस्मात्? प्रतिज्ञादृष्टान्तानुपरोधात्। एवं प्रतिज्ञादृष्टान्तौ श्रौतौ

नोपरुध्येते । प्रतिज्ञा तावत्— 'उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' इति । तत्र चैकेन विज्ञातेन र्वमन्यदविज्ञातमपि विज्ञातं भवतीति प्रतीयते । च्चोपादानकारणविज्ञाने सर्वविज्ञानं भवत्युपादानकारणाव्यतिरेकात्कार्यस्य । निमित्तकारणाव्यतिरेकस्तु कार्यस्य नास्ति, लोके तक्ष्णः प्रासादव्यतिरेकदर्शनात् । दृष्टान्तोऽपि— 'यथा सोम्यैकेन मृत्पिंडेन र्वं मृन्मयं विज्ञातं स्याद्वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इत्युपादानकारणगोचर एवाम्नायते । तथा 'एकेन ोहमणिना सर्वं लोहमयं विज्ञातं स्यात्' 'एकेन नखानिकृंतनेन सर्वं कार्ष्णायसं विज्ञातं स्यात्' इति च । तथान्यत्रापि 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' इति प्रतिज्ञा । 'यथा पृथिव्यामोषधयः संभवन्ति' इति दृष्टान्तः । तथा 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम्' इति प्रतिज्ञा । 'स यथा दुंदुभेर्हन्यमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय दुंदुभेस्तु ग्रहणेन दुंदुभ्याघातस्य वा शब्दो गृहीतः' इति दृष्टान्तः । एवं यथासंभवं प्रतिवेदान्तं प्रतिज्ञादृष्टान्तौ प्रकृतित्वसाधनौ प्रत्येतव्यौ । यत इतीयं पंचमी 'यतो वा इमानि भूतानि जायन्ते' इत्यत्र "जनिकर्तुः प्रकृतिः" इति विशेषस्मरणात्प्रकृतिलक्षण एवापादाने द्रष्टव्या । निमित्तत्वं त्वधिष्ठात्रंतराभावादधिगंतव्यम् । यथा हि लोके मृत्सुवर्णादिकमुपादान ारणं कुलालसुवर्णकारादीनधिष्ठातॄनपेक्ष्य प्रवर्तते नैवं ब्रह्मण उपादानकारणस्य सतोऽन्योऽधिष्ठातापेक्ष्योऽस्ति, प्रागुत्पत्तेः 'एकमेवाद्वितीयं' इत्यवधारणात् । अधिष्ठात्रंतराभावोऽपि प्रतिज्ञादृष्टान्तानुपरोधादेवोदितो वेदितव्यः । अधिष्ठातरि ह्युपादानादन्यस्मिन्नभ्युपगम्यमाने पुनरप्येकविज्ञानेन र्वविज्ञानस्या भवात्प्रतिज्ञादृष्टान्तोपरोध एव स्यात् । तस्मादधिष्ठात्रंतराभावादात्मनः कर्तृत्वमुपादानान्तराभावाच्च प्रकृतित्वम् ॥२३॥

कुतश्चात नः कर्तृत्वप्रकृतित्वे—

**अभिध्योपदेशा ॥२४॥**

अभिध्योपदेशश्चात्मनः कर्तृत्वप्रकृतित्वे गमयति 'ोऽकामय बहु स्यां प्रजायेयेति,' 'तदैक्षत बहु स्यां प्रजायेय' इति च । तत्राभिध्यानपूर्विकायाः स्वातंत्र्यप्रवृत्तेः कर्तेति गम्यते । बहु स्यामिति प्रत्यगात्मविषयत्वात्

हुभवनाभिध्यानस्य प्रकृतिरित्यपि गम्यते ॥२४॥

साक्षाच्चोभयाम्नानात् ॥२५॥

प्रकृतित्वस्यायमभ्युच्चयः। इतश्च प्रकृतिर्ब्रह्म, यत्कारणं साक्षाद्ब्रह्मैव कारणमुपादायोभौ प्रभवप्रलयावाम्नायेते— 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते। आकाशं प्रत्यस्तं यन्ति' इति। यद्धि यस्मात्प्रभवति यस्मिंश्च प्रलीयते तत्तस्योपादानं प्रसिद्धम्। यथा व्रीहियवादीनां पृथिवी। साक्षादिति चोपादानान्तरानुपादानं दर्शयत्याकाशादेवेति। प्रत्यस्तमयश्च नोपादानादन्यत्र कार्यस्य दृष्टः ॥२५॥

आत्मकृतेः परिणामात् ॥२६॥

इतश्च प्रकृतिर्ब्रह्म, यत्कारणं ब्रह्मप्रक्रियायाम् 'तदात्मानं स्वयमकुरु' इत्यात्मनः कर्मत्वं कर्तृत्वं च दर्शयति। आत्मानमिति कर्मत्वं, स्वयमकुरुतेति तृत्वम्। कथं पुनः पूर्वसिद्धस्य सतः कर्तृत्वेन व्यवस्थितस्य क्रियमाणत्वं शक्यं संपादयितुम्। परिणामादिति ब्रूमः। पूर्वसिद्धोऽपि हि सन्नात्मा विशेषेण विकारात्मना परिणमयामास आत्मानमिति। विकारात्मना च परिणामो मृदाद्यासु प्रकृतिषूपलब्धः। स्वयमिति च विशेषणान्निमित्तान्तरानपेक्षत्वमपि प्रतीयते। 'परिणामात्' इति वा पृथक्सूत्रम्। तस्यैषोऽर्थः— इतश्च प्रकृतिर्ब्रह्म, यत्कारणं ब्रह्मण एव विकारात्मना परिणामः सामानाधिकरण्येनाम्नायते 'सच्च त्यच्चाभवत्। निरुक्तं चानिरुक्तं च' इत्यादिनेति॥

योनिश्च हि गीयते ॥२ ॥

इतश्च प्रकृतिर्ब्रह्म, यत्कारणं ब्रह्म योनिरित्यपि पठ्यते वेदान्तेषु ' -तारमीशं पुरुषं ब्रह्म योनिम्' इति, 'यद्भूतयोनिं परिपश्यन्ति धीराः' इति च। योनिशब्दश्च प्रकृतिवचनः समधिगतो लोके 'पृथिवी योनिरोषधिवनस्पतीनाम्' इति। स्त्रीयोनेरप्यस्त्येवावयवद्वारेण गर्भं प्रत्युपादानकारणत्वम्। क्वचित्स्थानवचनोऽपि योनिशब्दो दृष्टः— "योनिष्ट इंद्र निषदे अकारि" इति। वाक्यशेषात्त्वत्र प्रकृतिवचनता परिगृ ते 'यथोर्णनाभिः सृजते गृह्णते च' इत्येवंजातीयकात्। एवं प्रकृतित्वं ब्रह्मणः प्रसिद्धम्। यत्पुनरिदमुक्तं ईक्षापूर्वकं कर्तृत्वं निमित्त रणेष्वेव कुलालादिषु लोके दृष्टं नोपादानेष्वित्यादि, तत्प्रत्युच्यते— न लो वदिह भवितव्यम्। न यमनुमानगम्यो

अर्थः । शब्दगम्यत्वात्त्वस्यार्थस्य यथाशब्दमिह भवितव्यम् । शब्दश्चेक्षितुः ईश्वरस्य प्रकृतित्वं प्रतिपादयतीत्यवोचाम । पुनश्चैतत्सर्वं विस्तरेण प्रतिवक्ष्यामः ॥२ ॥

८ सर्वव्याख्यानाधिकरणम् । सू० २८ ।

**एतेन सर्वे व्याख्याता व्याख्याताः ॥२८॥**

'ईक्षतेर्नाशब्दम्' [१.१.५] इत्यारभ्य प्रधानकारणवादः सूत्रैरेव पुनः पुनराशंक्य निराकृतः, तस्य हि पक्षस्योपोद्बलकानि कानिचिल्लिंगाभासानि वेदान्तेष्वापातेन मंदमतीन्प्रति भान्तीति । स च कार्यकारणानन्यत्वाभ्युपगमात्प्रत्यासन्नो वेदान्तवादस्य । देवलप्रभृतिभिश्च कैश्चिद्धर्मसूत्रकारैः स्वग्रंथेष्वाश्रितः, तेन तत्प्रतिषेधे एव यत्नोऽतीव कृतो नाण्वादिकारणवादप्रतिषेधे । तेऽपि ब्रह्मकारणवादपक्षस्य प्रतिपक्षत्वात्प्रतिषेद्धव्याः । तेषामप्युपोद्बलकं वैदिकं किंचिल्लिंगमापातेन मंदमतीन्प्रति भायादिति । अतः प्रधानमल्लनिबर्हणन्यायेनातिदिशति— एतेन प्रधानकारणवादप्रतिषेधन्यायकलापेन सर्वेऽण्वादिकारणवादा अपि प्रतिषिद्धतया व्याख्याता वेदितव्याः । तेषामपि प्रधानवदशब्दत्वाच्छब्दविरोधित्वाच्चेति । व्याख्याता व्याख्या । इति पदाभ्यासोऽध्यायपरिसमाप्तिं द्योतयति ॥२८॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवत्पूज्यपादकृतौ शारीरकमीमांसाभाष्ये प्रथमाध्यायस्य चतुर्थः पादः समाप्तः ॥ इति श्रीमद्ब्रह्मसूत्रशांकरभाष्ये समन्वयाख्यः प्रथमोऽध्यायः ॥

# द्वितीयोऽध्यायः



## द्वितीयाध्याये थमः पादः ।

**१ स्मृत्यधिकरणम् । सू० १–२ ।**

प्रथमेऽध्याये सर्वज्ञः सर्वेश्वरो जगत उत्पत्तिकारणं, मृत्सुवर्णादय इव घटरुचकादीनाम् । उत्पन्नस्य जगतो नियंतृत्वेन स्थितिकारणं, मायावीव मायायाः । प्र ारितस्य च जगतः पुनः स्वात्मन्येवोपसंहारकारणं, अवनिरिव चतुर्विधस्य भूतग्रामस्य । एव च विषां न आत्मा इत्येतद्वेदान्तवाक्यसमन्वयप्रतिपादनेन प्रतिपादितम् । प्रधानादिकारणवादाश्चाशब्दत्वेन निराकृताः । इदानीं स्वपक्षे स्मृतिन्यायविरोधपरिहारः, प्रधानादिवादानां च न्यायाभासोपबृंहितत्वं, प्रतिवेदान्तं च सृष्ट्यादिप्रक्रियाया अविगीतत्वमित्यस्यार्थजातस्य प्रतिपादनाय द्वितीयोऽध्याय आरभ्यते । तत्र प्रथमं तावत्स्मृतिविरोधमुपन्यस्य परिहरति—

**स्मृत्यनवकाशदोषप्र ंग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसंगात् ॥ १ ॥**

यदुक्तं ब्रह्मैव सर्वज्ञं जगतः कारणमिति, तदयुक्तम् । कुतः? स्मृत्यनवकाशदोषप्रसंगात् । स्मृतिश्च तंत्राख्या परमर्षिप्रणीता शिष्टपरिगृहीता, अन्याश्च तदनुसारिण्यः स्मृतयः, ता एवं सत्यनवकाशाः प्रसज्येरन् । तासु ह्यचेतनं प्रधानं स्वतंत्रं जगतः कारणमुपनिबध्यते । मन्वादिस्मृतयस्तावत् चोदनालक्षणेनाग्निहोत्रादिना धर्मजातेनापेक्षितमर्थं समर्पयन्त्यः सावकाशा भवन्ति । अस्य वर्णस्यास्मिन्काले ऽनेन विधानेनोपनयनं, ईदृशश्चाचारः, इत्थं वेदाध्ययनं, इत्थं समावर्तनं, इत्थं सहधर्मचारिणीसंयोग इति । था पुरुषार्थांश्च वर्णाश्रमधर्मान्नानाविधान्विदधाति । नैवं कापिलादिस्मृतीनामनुष्ठेये विषयेऽवकाशोऽस्ति । मोक्षसाधनमेव हि सम्यग्दर्शनमधिकृत्य ताः प्रणीताः । यदि तत्राप्यनवकाशाः स्युरानर्थक्यमेवासां प्रसज्येत । तस्मात्तदविरोधेन वेदान्ता व्याख्यातव्याः । कथं पुनरीक्षत्यादिभ्यो हेतुभ्यो ब्रह्मैव सर्वज्ञं : कारणमित्यवधारितः श्रुत्यर्थः स्मृत्यनवकाशदोषप्रसंगेन पुनराक्षिप्यते? भवेदयमनाक्षेपः स्वतंत्रप्रज्ञानाम् । परतंत्रप्रज्ञास्तु प्रायेण जनाः स्वातं-

त्र्येण श्रुत्यर्थमवधारयितुमशक्नुवन्तः प्रख्यातप्रणेतृकासु स्मृतिष्ववलंबेरन् । तद्बलेन च श्रुत्यर्थं प्रतिपित्सेरन् । अस्मत्कृते च व्याख्याने न विश्वस्युर्बहुमानात्स्मृतीनां प्रणेतृषु । कपिलप्रभृतीनां चार्षं ज्ञानमप्रतिहतं स्मर्यते । श्रुतिश्च भवति— "ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येत्" इति । तस्मान्नैषां मतमयथार्थं शक्यं संभावयितुम् । तर्कावष्टंभेन चैतेऽर्थं प्रतिष्ठापयन्ति । तस्मादपि स्मृतिबलेन वेदान्ता व्याख्येया इति पुनराक्षेपः ॥

तस्य समाधिः— 'नान्यस्मृत्यनवकाशदोषप्रसंगात्' इति । यदि स्मृत्यनवकाशदोषप्रसंगेनेश्वरकारणवाद आक्षिप्येत, एवमप्यन्या ईश्वरकारणवादिन्यः स्मृतयोऽनवकाशाः प्रसज्येरन् । ता उदाहरिष्यामः— "यत्तत्सूक्ष्ममविज्ञेयम्" इति परं ब्रह्म प्रकृत्य "स ह्यंतरात्मा भूतानां क्षेत्रज्ञश्चेति कथ्यते" इति चोक्त्वा "तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम" इत्याह । तथान्यत्रापि "अव्यक्तं पुरुषे ब्रह्मन्निर्गुणे संप्रलीयते" इत्याह । "अतश्च संक्षेपमिमं शृणुध्वं नारायणः सर्वमिदं पुराणः । गकाले च करोति सर्वं संहारकाले च तदत्ति भूयः" इति पुराणे । भगवद्गीतासु च— "अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा" इति । परमात्मानमेव च प्रकृत्यापस्तंबः पठति— "तस्मात्कायाः प्रभवन्ति सर्वे स मूलं शाश्वतिकः स नित्यः" इति । एवमनेकशः स्मृतिष्वपीश्वरः कारणत्वेनोपादानत्वेन च प्रकाश्यते । स्मृतिबलेन प्रत्यवतिष्ठमानस्य स्मृतिबलेनैवोत्तरं वक्ष्यामीत्यतोऽयं अन्यस्मृत्यनवकाशदोषोपन्यासः । दर्शितं तु श्रुतीनामीश्वरकारणवादं प्रति तात्पर्यम् । विप्रतिपत्तौ च स्मृतीनामवश्यकर्तव्येऽन्यतरपरिग्रहेऽन्यतरपरित्यागे च श्रुत्यनु ारिण्यः स्मृतयः प्रमाणं, अनपेक्ष्या इतराः । तदुक्तं प्रमाणलक्षणे— "विरोधे त्वनपेक्षं स्यादसति नुमानम्" इति । नचातीन्द्रियानर्थान् श्रुतिमंतरेण कश्चिदुपलभत इति शक्यं संभावयितुं निमित्ताभावात् । शक्यं - पिलादीनां सिद्धानामप्रतिहतज्ञानत्वादिति चेत् । न । सिद्धेरपि पेक्षत्वात् । धर्मानुष्ठानापेक्षा हि सिद्धिः । च धर्मश्चोदनालक्षणः । ततश्च पूर्वसिद्धाराश्चोदनाया अर्थो न पश्चिमसिद्धपुरुषवचनवशेनातिशंकितुं शक्यते । सिद्धव्यपाश्रयकल्पनायामपि बहुत्वात्सिद्धानां प्रदर्शितेन प्रकारेण स्मृतिविप्रति-

पत्तौ त्यां श्रुतिव्यपाश्रयादन्यान्निर्णयकारणमस्ति। परतंत्रप्रज्ञस्यापि नाकस्मात्स्मृतिविशेषविषयः पक्षपातो युक्तः। कस्यचित्क्वचित्पक्षपाते सति पुरुषमतिवैश्वरूप्येण तत्त्वाव्यवस्थानप्रसंगात्। तस्मात्तस्यापि स्मृतिविप्रतिपत्त्युपन्यासेन स्मृत्यनुसारानुसारविषयविवेचनेन च सन्मार्गे प्रज्ञा संग्रहणीया। या तु श्रुतिः कपिलस्य ज्ञानातिशयं प्रदर्शयन्ती प्रदर्शिता न तया श्रुतिविरुद्धमपि कापिलं मतं श्रद्धातुं शक्यं, कापिलमिति श्रुतिसामान्यमात्रत्वात्। अन्यस्य च कपिलस्य सगरपुत्राणां प्रतप्तुर्वासुदेवनाम्नः स्मरणात्। अन्यार्थदर्शनस्य च प्राप्तिरहितस्यासाधकत्वात्। भवति चान्या मनोर्माहात्म्यं प्रख्यापयन्ती श्रुतिः— "यद्वै किंच मनुरवदत्तद्भेषजम्" इति। मनुना च "सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि। संपश्यन्नात्मयाजी वै स्वाराज्यमधिगच्छति॥" इति सर्वात्मत्वदर्शनं प्रशंसता कापिलं मतं निंद्यत इति गम्यते। कपिलो हि न सर्वात्मत्वदर्शनमनुमन्यते, आत्मभेदाभ्युपगमात्। महाभारतेऽपि च 'बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु' इति विचार्य, 'बहवः पुरुषा राजन्सांख्ययोगविचारिणाम्' इति परपक्षमुपन्यस्य तद्व्युदासेन— "बहूनां पुरुषाणां हि यथैका योनिरुच्यते। तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम्॥" इत्युपक्रम्य "ममान्तरात्मा तव च ये चान्ये देहसंस्थिताः। सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित्क्वचित्॥ विश्वमूर्धा विश्वभुजो विश्वपादाक्षिनासिकः। एकश्चरति भूतेषु स्वैरचारी यथासुखम्॥" इति सर्वात्मतैव निर्धारिता। श्रुतिश्च सर्वात्मतायां भवति— 'यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः। तत्र को मोहः कः शोक एकत्वमनुपश्यतः' इत्येवंविधा। अतश्च सिद्धमात्मभेदकल्पनयापि कपिलस्य तंत्रं वेदविरुद्धं वेदानुसारिमनुवचनविरुद्धं च, न केवलं स्वतंत्रप्रकृतिकल्पनयैवेति। वेदस्य हि निरपेक्षं स्वार्थे प्रामाण्यं रवेरिव रूपविषये। पुरुषवचसां तु मूलान्तरापेक्षं वक्तृस्मृतिव्यवहितं चेति विप्रकर्षः। तस्माद्वेदविरुद्धे विषये स्मृत्यनवकाशदोषप्रसंगो न दोषः॥१॥

कुतश्च स्मृत्यनवकाशदोषप्रसंगो न दोषः—

**इतरेषां चानुपलब्धेः॥२॥**

प्रधानादितराणि यानि प्रधानपरिणामत्वेन स्मृतौ कल्पितानि मह-

दादीनि न तानि वेदे लोके चोपलभ्यन्ते । भूतेन्द्रियाणि तावल्लोकवेदप्रसिद्धत्वाच्छक्यन्ते स्मर्तुम् । अलोकवेदप्रसिद्धत्वात्तु महदादीनां षष्ठस्येवेन्द्रियार्थस्य न स्मृतिरवकल्पते । यदपि क्वचित्तत्परमिव श्रवणमवभासते तदप्यतत्परं व्याख्यातम् 'आनुमानिकमप्येकेषाम्' [१.४.१] इत्यत्र । कार्यस्मृतेरप्रामाण्यात्कारणस्मृतेरपि अप्रामाण्यं युक्तमित्यभिप्रायः । तस्मादपि न स्मृत्यनवकाशदोषप्रसंगो दोषः । तर्कावष्टंभं तु 'न विलक्षणत्वात्'[२.१.४] इत्यारभ्योन्मथिष्यति ॥२॥

**२ योगप्रत्युक्त्यधिकरणम् । सू० ३ ।**

**एतेन योगः प्रत्युक्तः ॥३॥**

एतेन सांख्यस्मृतिप्रत्याख्यानेन योगस्मृतिरपि प्रत्याख्याता द्रष्टव्या इत्यतिदिशति । तत्रापि श्रुतिविरोधेन प्रधानं स्वतंत्रमेव कारणं, महदादीनि च कार्याण्यलोकवेदप्रसिद्धानि कल्प्यन्ते । नन्वेवं सति समानन्यायत्वात्पूर्वेणैवैतद्गतं, किमर्थं पुनरतिदिश्यते ? अस्ति ह्यत्राभ्यधिकाशंका । सम्यग्दर्शनाभ्युपायो हि योगो वेदे विहितः 'श्रोतव्यो मंतव्यो निदिध्यासितव्यः' इति । "त्रिरुन्नतं स्थाप्य समं शरीरम्" इत्यादिना चासनादिकल्पनापुरःसरं बहुप्रपंचं योगविधानं श्वेताश्वतरोपनिषदि दृश्यते । लिंगानि च वैदिकानि, योगविषयाणि सहस्रश उपलभ्यन्ते 'तां योगमिति मन्यन्ते स्थिरामिंद्रियधारणाम्' इति, 'विद्यामेतां योगविधिं च कृत्स्नम्' इति चैवमादीनि । योगशास्त्रेऽपि "अथ तत्त्वदर्शनाभ्युपायो योगः" इति सम्यग्दर्शनाभ्युपायत्वेनैव योगोऽगीक्रियते । अतः संप्रतिपन्नार्थैकदेशत्वात् अष्टकादिस्मृतिवद्योगस्मृतिरपि अनपवदनीया भविष्यतीति । इयमप्यधिका शंकाऽतिदेशेन निवर्त्यते । अर्थैकदेशसंप्रतिपत्तावपि अर्थैकदेशविप्रतिपत्तेः पूर्वोक्ताया दर्शनात् । सतीष्वप्यध्यात्मविषयासु बह्वीषु स्मृतिषु सांख्ययोगस्मृत्योरेव निराकरणे यत्नः कृतः। सांख्ययोगौ हि परमपुरुषार्थसाधनत्वेन लोके प्रख्यातौ, शिष्टैश्च परिगृहीतौ, लिंगेन च श्रौतेनोपबृंहितौ । "तत्कारणं सांख्ययोगाभिपन्नं ज्ञात्वा देवं मुच्यते सर्वपाशैः" इति । निराकरणं तु न सांख्यज्ञानेन वेदनिरपेक्षेण योगमार्गेण वा निःश्रेयसमधिगम्यत इति । श्रुतिर्हि वैदिकादात्मैकत्वविज्ञानादन्यान्निःश्रेयससाधनं वारयति "तमेव विदित्वातिमृत्युमेति नान्यः पंथा वि-

लोके समस्तस्य वस्तुनश्चेतनत्वं चेतनप्रकृतिकत्वश्रवणाच्छब्दशरणतया केवलयोत्प्रेक्षेत । तच्च शब्देनैव विरुध्यते, यतः शब्दादपि तथात्वमवगम्यते । तथात्वमिति प्रकृतिविलक्षणत्वं कथयति । शब्द एव 'विज्ञानं चाविज्ञानं च' इति कस्यचिद्विभागस्याचेतनतां श्रावयंश्चेतनाद्ब्रह्मणो विलक्षणमचेतनं जगच्छ्रावयति ॥४॥

ननु चेतनत्वमपि क्वचिदचेतनत्वाभिमतानां भूतेंद्रियाणां श्रूयते । यथा "मृदब्रवीत्" "आपोऽब्रुवन्" इति, 'तत्तेज ऐक्षत' 'ता आप ऐक्षन्त' इति चैवमाद्या भूतविषया चेतनत्वश्रुतिः । इंद्रियविषयापि 'ते हेमे प्राणा अहंश्रेयसे विवदमाना ब्रह्म जग्मुः' इति, 'ते ह वाचमूचुस्त्वं न उद्गायेति' इत्येवमाद्येन्द्रियविषयेति । अत उत्तरं पठति—

**अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥५॥**

तुशब्द आशंकामपनुदति । न खलु मृदब्रवीदित्येवंजातीयकया श्रुत्या भूतेंद्रियाणां चेतनत्वमाशंकनीयम् । यतोऽभिमानिव्यपदेश एषः । मृदाद्यभिमानिन्यो वागाद्यभिमानिन्यश्च चेतना देवता वदन वदनादिषु चेतनोचितेषु व्यवहारेषु व्यपदिश्यन्ते, न भूतेंद्रियमात्रम् । कस्मात्? विशेषानुगतिभ्याम् । विशेषो हि भोक्तृणां भूतेंद्रियाणां च चेतनाचेतनप्रविभागलक्षणः प्रागभिहितः । सर्वचेतनतायां चासौ नोपपद्येत । अपिच कौषतिकिनः प्राणसंवादे करणमात्राशंकाविनिवृत्तयेऽधिष्ठातृचेतनपरिग्रहाय देवताशब्देन विशिंषन्ति — 'एता ह वै देवता अहंश्रेयसे विवदमानाः' इति । 'ता वा एताः सर्वा देवताः प्राणे निःश्रेयसं विदित्वा' इति च । अनुगताश्च सर्वत्राभिमानिन्यश्चेतना देवता मंत्रार्थवादेतिहासपुराणादिभ्योऽवगम्यन्ते । 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' इत्येवमादिका च श्रुतिः करणेष्वनुग्राहिकां देवतामनुगतां दर्शयति । प्राणसंवादवाक्यशेषे च 'ते ह प्राणाः प्रजापतिं पितरमेत्योचुः' इति श्रेष्ठत्वनिर्धारणाय प्रजापतिगमनं, तद्वचनाच्चैकैकोत्क्रमणेन अन्वयव्यतिरेकाभ्यां प्राणश्रैष्ठ्यप्रतिपत्तिः । 'तस्मै बलिहरणम्' इति चैवंजातीयकोऽस्मदादिष्विव व्यवहारोऽनुगम्यमानोऽभिमानिव्यपदेशं द्रढयति । 'तत्तेज ऐक्षत' इत्यपि परस्या एव देवताया अधिष्ठात्र्याः स्वविकारेष्वनुगताया इयमीक्षा व्यपदिश्यत इति द्रष्टव्यम् । तस्माद्विलक्षणमेवेदं ब्रह्मणः ।

जगत् । विलक्षणत्वाच्च न ब्रह्मप्रकृतिकमित्याक्षिप्ते प्रतिविधत्ते ॥५॥

दृश्यते तु ॥६॥

तुशब्दः पक्षं व्यावर्तयति । यदुक्तं विलक्षणत्वान्नेदं जगद्ब्रह्मप्रकृतिमिति । नायमेकान्तः । दृश्यते हि लोके चेतनत्वेन प्रसिद्धेभ्यः पुरुषादिभ्यो विलक्षणानां केशनखादीनामुत्पत्तिः, अचेतनत्वेन च प्र[illegible]द्धेभ्यो गोमयादिभ्यो वृश्चिकादीनाम् । नन्वचेतनान्येव पुरुषादिशरीराण्यचेतनानां केशनखादीनां कारणानि, अचेतनान्येव च वृश्चिकादिशरीराण्यचेतनानां गोमयादीनां कार्याणीति । उच्यते— एव पि किंचिदचे नं चेतनस्यायतनभावमुपगच्छति किंचिन्नेत्यस्त्येव वैलक्षण्यम् । महांश्चायं पारिणामिकः स्वभावविप्रकर्षः पुरुषादीनां केशन [illegible]दीनां च स्वरूपादिभेदात् । तथा गोमयादीनां वृश्चिकादीनां च । अत्यंतसारूप्ये च प्रकृतिविकारभाव एव प्रलीयेत । अथोच्येत— अस्ति कश्चित्पार्थिवत्वादिस्वभावः पुरुषादीनां केशनखादिष्वनुवर्तमानो गोमयादीनां च वृश्चिकादिष्विति । ब्रह्मणोऽपि तर्हि सत्तालक्षणः स्वभाव आकाशादिष्वनुवर्तमानो दृश्यते । विलक्षणत्वेन च कारणेन ब्रह्मप्रकृतिकत्वं जगतो दूषयता किमशेषस्य ब्रह्मस्वभावस्याननुवर्तनं विलक्षणत्वं अभिप्रेयते उत यस्य कस्यचित्? अथ चैतन्यस्येति वक्तव्यम् । प्रथमे विकल्पे समस्तप्रकृतिविकारभावोच्छेदप्र[illegible]गः । नह्यसत्यतिशये प्रकृतिविकारभाव इति भवति । द्वितीये चासिद्धत्वम् । दृश्यते हि सत्तालक्षणो ब्रह्मस्वभाव आकाशादिष्वनुवर्तमान इत्युक्तम् । तृतीये तु दृष्टान्ताभावः । किं हि यच्चैतन्येनानन्वितं तदब्रह्मप्रकृतिकं दृष्टमिति ब्रह्मकारणवादिनं प्रत्युदा[illegible]येत! समस्[illegible]स्य वस्तुजातस्य ब्रह्मप्रकृतिकत्वाभ्युपगमात् । आगमविरोधस्तु प्र[illegible] द्ध एव । चेतनं ब्रह्म जगतः कारणं प्रकृतिश्चेत्यागमतात्पर्यस्य प्र[illegible]धितत्वात् । यत्तूक्तं परिनिष्पन्नत्वाद्ब्रह्मणि प्रमाणान्तराणि भवेयुरिति । तदपि मनोरथमात्रम् । रूपाद्यभावाद्धि नायमर्थः प्रत्यक्षस्य गोचरः । लिंगाद्यभावाच्च नानुमानादीनाम् । आगममात्रसमधिगम्य एव त्वयमर्थो धर्मवत् । तथाच श्रुतिः— 'नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ' इति । "को अद्धा वेद क इह प्रवोचत्" "इयं विसृ[illegible]यत आबभूव" इति चैते ऋचौ [illegible]द्धानामपीश्वराणां दुर्बोधतां जगत्कारणस्य दर्शयतः । स्मृतिरपि

भवति— "अचिंत्याः खलु ये भावा न तांस्तर्केण योजयेत्" इति । "अव्यक्तोऽयमचिंत्योऽयमविकार्योऽयमुच्यते" इति च । "न मे विदुः सुरगणाः प्रभवं न महर्षयः । अहमादिर्हि देवानां महर्षीणां च सर्वशः" इति चैवंजातीयका । यदपि श्रवणव्यतिरेकेण मननं विदधच्छब्द एव तर्कमप्यादर्तव्यं दर्शयतीत्युक्तम् । नानेन मिषेण शुष्कतर्कस्यात्र आत्मलाभः संभवति । श्रुत्यनुगृहीत एव ह्यत्र तर्कोऽनुभवांगत्वेन आश्रीयते । स्वप्नान्तबुद्धान्तयोः उभयोः इतरेतरव्याभिचारादात्मनोऽनन्वागतत्वं, संप्रसादे च प्रपंचपरित्यागेन सदात्मना संपत्तेर्निष्प्रपंचसदात्मत्वं, प्रपंचस्य ब्रह्मप्रभवत्वात्कार्यकारणानन्यत्वन्यायेन ब्रह्माव्यतिरेकः, इत्येवंजातीयकः । 'तर्काप्रतिष्ठानात्' [२.१.११] इति च केवलस्य तर्कस्य विप्रलंभकत्वं दर्शयिष्यति । योऽपि चेतनकारणश्रवणबलेनैव समस्तस्य जगतश्चेतनतामुत्प्रेक्षेत तस्यापि 'विज्ञानं चाविज्ञानं च' इति चेतनाचेतनविभागश्रवणं विभावनाविभावनाभ्यां चैतन्यस्य शक्यत एव योजयितुम् । परस्यैव त्विदमपि विभागश्रवणं न युज्यते । कथम्? परमकारणस्य ह्यत्र समस्तजगदात्मना समवस्थानं श्राव्यते 'विज्ञानं चाविज्ञानं चाभवत्' इति । तत्र यथा चेतनस्याचेतनभावो नोपपद्यते विलक्षणत्वात्, एवमचेतनस्यापि चेतनभावो नोपपद्यते । प्रत्युक्तत्वात्तु विलक्षणत्वस्य यथाश्रुत्यैव चेतनं कारणं ग्रहीतव्यं भवति ॥६॥

**असदिति चेन्न प्रतिषेधमात्र ात् ॥ ॥**

यदि चेतनं शुद्धं शब्दादिहीनं च ब्रह्म तद्विपरीतस्याचेतनस्याशुद्धस्य शब्दादिमतश्च कार्यस्य कारणमिष्येत अ त्तर्हि कार्यं प्रागुत्पत्तेरिति प्र ज्येत । अनिष्टं चैतत्सत्कार्यवादिनस्तवेति चेत् । नैष दोषः । प्रतिषेधमात्रत्वात् । प्रतिषेधमात्रं हीदं, नास्य प्रतिषेधस्य प्रतिषेध्यमस्ति । नह्ययं प्रतिषे : प्रागुत्पत्तेः सत्त्वं कार्यस्य प्रतिषेद्धुं शक्नोति । कथम्? यथैव हीदानीमपीदं कार्यं कारणात्मना सदेवं प्रागुत्पत्तेरपीति गम्यते । नहीदानीमपीदं कार्यं कारणात्मानमंतरेण स्वतंत्रमेवास्ति । 'सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद' इत्यादिश्रवणात् । कारणात्मना तु सत्त्वं कार्यस्य प्रागुत्पत्तेरविशिष्टम् । ननु शब्दादिहीनं ब्रह्म जगतः कारणम् । बाढम् । नतु शब्दादिमत्कार्यं कार-

णात्मना हीनं प्रागुत्पत्तेरिदानीं वास्ति । तेन न शक्यते वक्तुं प्रागुत्पत्तेरसत्कार्यमिति । विस्तरेण चैतत्कार्यकारणानन्यत्ववादे वक्ष्यामः ॥७॥

**अपीतौ तद्वत्प्रसंगादसमंजसम् ॥८॥**

अत्राह— यदि स्थौल्यसावयवत्वाचेतनत्वपरिच्छिन्नत्वाशुद्ध्यादिधर्मकं कार्यं ब्रह्मकारणकमभ्युपगम्येत, तदापीतौ प्रलये प्रतिसंसृज्यमानं कार्यं कारणाविभागमापद्यमानं कारणमात्मीयेन धर्मेण दूषयेदिति, अपीतौ कारणस्यापि ब्रह्मणः कार्यस्येवाशुद्ध्यादिरूपताप्रसंगात्सर्वज्ञं ब्रह्म जगत्कारणमित्यसमंजसमिदमौपनिषदं दर्शनम् । अपिच मस्तस्य विभागस्याविभागप्राप्तेः पुनरुत्पत्तौ नियमकारणाभावाद्भोक्तृभोग्यादिविभागेनोत्पत्तिर्न प्राप्नोतीत्यसमंसम् । अपिच भोक्तृणां परेण ब्रह्मणाऽविभागं गतानां कर्मादिनिमित्तप्रलयेऽपि पुनरुत्पत्तावभ्युपगम्यमानायां मुक्तानामपि पुनरुत्पत्तिप्रसंगादसमंजसम् । अथेदं जगदपीतावपि विभक्तमेव परेण ब्रह्मणावतिष्ठेत, एवमप्यपीतिश्च न संभवति, कारणाव्यतिरिक्तं च कार्यं न संभवतीत्यसमंजसमेवेति ॥८॥

अत्रोच्यते—

**न तु दृष्टान्तभावात् ॥९॥**

नैवास्मदीये दर्शने किंचिदसामंजस्यमस्ति । यत्तावदभिहितं—कारणमपिगच्छत्कार्यं कारणमात्मीयेन धर्मेण दूषयेदिति, तददूषणम् । कस्मात् ? दृष्टान्तभावात् । सन्ति हि दृष्टान्ता यथा कारणमपिगच्छत्कार्यं कारणं आत्मीयेन धर्मेण न दूषयति । तद्यथा शरावादयो मृत्प्रकृतिका विकारा विभागावस्थायामुच्चावचमध्यमप्रभेदाः सन्तः पुनः प्रकृतिमपिगच्छन्तो न तां आत्मीयेन धर्मेण संसृजन्ति । रुचकादयश्च सुवर्णविकारा अपीतौ न पुनः सुवर्णमात्मीयेन धर्मेण संसृजन्ति । पृथिवीविकारश्चतुर्विधो भूतग्रामो न पृथिवीमपीतावात्मीयेन धर्मेण संसृजति । त्वत्पक्षस्य तु न कश्चित् दृष्टान्तोऽस्ति । अपीतिरेव हि न संभवेद्यदि कारणे कार्यं स्वधर्मेणैवावातिष्ठेत । अनन्यत्वेऽपि कार्यकारणयोः, कार्यस्य कारणात्मत्वं नतु कारणस्य कार्यात्मत्वं 'आरंभणशब्दादिभ्यः' [२.१.१४] इत्यत्र वक्ष्यामः । अत्यल्पं चेदमुच्यते—कार्यमपीतावात्मीयेन धर्मेण कारणं संसृजेदिति । स्थितावपि समानोऽयं प्र-

त्वकल्पना निरर्थिका । तस्मात्सूक्ष्माः परिच्छिन्नाश्च प्राणा इत्यध्यवस्यामः॥ ॥

**४ प्राणश्रैष्ठ्याधिकरणम् । सू० ८ ।**

**श्रेष्ठश्च ॥८॥**

मुख्यश्च प्राणः इतरप्राणवद्ब्रह्मविकारः इत्यतिदिशति । तच्चाविशेषेणैव सर्वप्राणानां ब्रह्मविकारत्वमाख्यातम् । 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इति सेन्द्रियमनोव्यतिरेकेण प्राणस्योत्पत्तिश्रवणात् । 'स प्राणमसृजत' इत्यादिश्रवणेभ्यश्च । किमर्थः पुनरतिदेशः ? अधिकाशंकापाकरणार्थः । नासदासीये हि ब्रह्मप्रधाने सूक्ते मंत्रवर्णो भवति "न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः । आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किंचनास" इति । आनीदिति प्राणकर्मोपादानात्प्रागुत्पत्तेः सन्तमिव प्राणं सूचयति । तस्मादजः प्राण इति जायते कस्यचिन्मतिः । तामतिदेशेनापनुदति । आनीच्छब्दोऽपि न प्रागुत्पत्तेः प्राणसद्भावं सूचयति । अवातमिति विशेषणात् । 'अप्राणो मनाः शुभ्रः' इति च मूलप्रकृतेः प्राणादिसमस्तविशेषरहितत्वस्य दर्शितत्वात् । तस्मात्कारणसद्भावप्रदर्शनार्थः एवायमानीच्छब्द इति । श्रेष्ठ इति च मुख्यं प्राणमभिदधाति— 'प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च' इति श्रुतिनिर्देशात् । ज्येष्ठश्च प्राणः शुक्रनिषेककालादारभ्य तस्य वृत्तिलाभात् । न चेत्तस्य तदानीं वृत्तिलाभः स्याद्योनौ निषिक्तं शुक्रं पूयेत न संभवेद्वा । श्रोत्रादीनां तु कर्णशष्कुल्यादिस्थानविभागनिष्पत्तौ वृत्तिलाभान्न ज्येष्ठत्वम् । श्रेष्ठश्च प्राणो गुणाधिक्यात्, 'न वै शक्ष्यामस्त्वदृते जीवितुम्' इति श्रुतेः ॥८॥

**५ वायुक्रियाधिकरणम् । सू० ९–१२ ।**

**न वायुक्रिये पृथगुपदेशात् ॥९॥**

स पुनर्मुख्यः प्राणः किंस्वरूप इतीदानीं जिज्ञास्यते । तत्र प्राप्तं तावत् श्रुतेर्वायुः प्राण इति । एवं हि श्रूयते— 'यः प्राणः स वायुः स एष वायुः पंचविधः प्राणोऽपानो व्यान उदानः समानः' इति । अथवा तंत्रांतरीयाभिप्रायात्समस्तकरणवृत्तिः प्राण इति प्राप्तम् । एवं हि तंत्रांतरीया आचक्षते— "सामान्या करणवृत्तिः प्राणाद्या वायवः पंच" इति ॥

अत्रोच्यते न वायुः प्राणो नापि करणव्यापारः । कुतः ? पृथ-

गुपदेशात् । वायोस्तावत्प्राणस्य पृथगुपदेशो भवति— 'प्राण एव ब्रह्मणश्चतुर्थः पादः स वायुना ज्योतिषा भाति च तपति च' इति । नहि वायुरेव सन् वायोः पृथगुपदिश्येत । तथा करणवृत्तेरपि पृथगुपदेशो भवति, वागादीनि करणान्यनुक्रम्य तत्र तत्र पृथक्प्राणस्यानुक्रमणात् । वृत्तिवृत्तिमतोश्चाभेदात् । नहि करणव्यापार एव सन् करणेभ्यः पृथगुपदिश्येत । तथा 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुः' इत्येवमादयोऽपि वायोः करणेभ्यश्च प्राणस्य पृथगुपदेशा अनुसर्तव्याः । नच समस्तानां करणानामेका वृत्तिः संभवति, प्रत्येकमेकैकवृत्तित्वात्समुदायस्य च अकारकत्वात् । ननु पंजरचालनन्यायेनैतद्भविष्यति । यथैकपंजरवर्तिनः एकादश पक्षिणः प्रत्येकं प्रतिनियतव्यापाराः सन्तः संभूयैकं पंजरं चालयन्ति, एवमेकशरीरवर्तिनः एकादश प्राणाः प्रत्येकं प्रतिनियतवृत्तयः सन्तः संभूयैकां प्राणाख्यां वृत्तिं प्रतिलप्स्यन्त इति । नेत्युच्यते । युक्तं तत्र प्रत्येकवृत्तिभिरवान्तरव्यापारैः पंजरचालनानुरूपैरेवोपेताः पक्षिणः संभूयैकं पंजरं चालयेयुरिति । तथा दृष्टत्वात् । इह तु श्रवणाद्यवान्तरव्यापारोपेताः प्राणा न संभूय प्राण्युरिति युक्तम्, प्रमाणाभावात् । अत्यंतविजातीयत्वाच्च श्रवणादिभ्यः प्राणनस्य । तथा प्राणस्य श्रेष्ठत्वाद्युद्घोषणं गुणभावोपगमश्च तं प्रति वागादीनां, न करणवृत्तिमात्रे प्राणेऽवकल्पते । तस्मादन्यो वायुक्रियाभ्यां प्राणः । कथं तर्हीयं श्रुतिः 'यः प्राणः स वायुः' इति । उच्यते— वायुरेवायमध्यात्ममापन्नः पंचव्यूहो विशेषात्मनावतिष्ठमानः प्राणो नाम भण्यते, न तत्त्वान्तरं नापि वायुमात्रम् । अतश्चोभे अपि भेदाभेदश्रुती न विरुध्येते ॥९॥

स्यादेतत् । प्राणोऽपि तर्हि जीववदस्मिञ्शरीरे स्वातंत्र्यं प्राप्नोति । श्रेष्ठत्वाद्गुणभावोपगमाच्च तं प्रति वागादीनामिंद्रियाणाम् । तथाह्यनेकविधा विभूतिः प्राणस्य श्राव्यते— 'सुप्तेषु वागादिषु प्राण एवैको जागर्ति प्राण एवैको मृत्युनाऽनाप्तः प्राणः संवर्गो वागादीन् वृंक्ते प्राण इतरान्प्राणान्रक्षति मातेव पुत्रान्' इति । तस्मात्प्राणस्यापि जीववत्स्वातंत्र्यप्रसंगः । तं परिहरति

**चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥१०॥**

तु-शब्दः प्राणस्य जीववत्स्वातंत्र्यं व्यावर्तयति। यथा चक्षुरादीनि राजप्रकृतिवज्जीवस्य कर्तृत्वं भोक्तृत्वं च प्रत्युपकरणानि न स्वतंत्राणि। तथा मुख्योऽपि प्राणो राजमंत्रिवज्जीवस्य सर्वार्थकरत्वेनोपकरणभूतो, न स्वतंत्रः। कुतः? तत्सहशिष्टयादिभ्यः। तैश्चक्षुरादिभिः सहैव प्राणः शिष्यते प्राणसंवादादिषु। सम नवर्मगां च सह शासनं युक्तं बृहद्रथंतरादिवत्। आदिशब्देन संहतत्वाचेतनत्वादीन्प्राणस्य स्वातंत्र्यानिराकरणहेतून्दर्शयति ॥१०॥

स्यादेतत्। यदि चक्षुरादिवत्प्राणस्य जीवं प्रति करणभावोऽभ्युपगम्येत, विषयान्तरं रूपादिवत्प्रसज्येत। रूपाद्यालोचनादिभिर्वृत्तिभिर्यथास्वं चक्षुरादीनां जीवं प्रति करणभावो भवति। अपिच एकादशैव कार्यजातानि रूपालोचनादीनि परिगणितानि यदर्थमेकादश प्राणाः संगृहीताः। नतु द्वादशमपरं कार्यजातमधिगम्यते यदर्थमयं द्वादशः प्राणः प्रतिज्ञायेतेति। अत उत्तरं पठति—

**अकरणत्वाच्च न दोषस्तथाहि दर्शयति ॥११॥**

न तावद्विषयान्तरप्रसंगो दोषः। अकरणत्वात्प्राणस्य। नहि चक्षुरादिवत्प्राणस्य विषयपरिच्छेदेन करणत्वमभ्युपगम्यते। नचास्यैतावता कार्याभाव एव। कस्मात्? तथाहि श्रुतिः प्राणान्तरेष्वसंभाव्यमानं मुख्यप्राणस्य वैशेषिकं कार्यं दर्शयति प्राणसंवादादिषु— 'अथ ह प्राणा अहंश्रेयसि व्यूदिरे' इत्युपक्रम्य 'यस्मिन्व उत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्येत स वः श्रेष्ठः' इति चोपन्यस्य, प्रत्येकं वागाद्युत्क्रमणेन तद्वृत्तिमात्रहीनं यथापूर्वं जीवनं दर्शयित्वा, प्राणोच्चिक्रमिषायां वागादिशैथिल्यापत्तिं शरीरपातप्रसंगं च दर्शयन्ती श्रुतिः प्राणनिमित्तां शरीरेन्द्रियस्थितिं दर्शयति। 'तान्वरि : प्राण उवाच मा मोहमापद्यथाहमेवैतत्पंचधात्मानं प्रविभज्यैतद्बाणमव भ्य विधारयामि' इति चैतमेवार्थं श्रुतिराह— 'प्राणेन रक्षन्नवरं कुलायम्' इति च सुप्तेषु चक्षुरादिषु प्राणनिमित्तां शरीररक्षां दर्शयति। 'यस्मात्कस्माच्चांगात्प्राण उत्क्रामति तदेव तच्छुष्यति' इति, तेन यदश्नाति यत्पिबति तेनेतरान्प्राणानवति' इति च, प्राणनिमित्तां शरीरेन्द्रियपुष्टिं दर्शयति। 'कस्मिन्न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामि' इति,

'स प्राणमसृ त' इति च प्राणनिमित्ते जीवस्य उत्क्रान्ति ति दर्श ति ॥११॥

## पंचवृत्तिर्मनो व्यपदिश्यते ॥१२॥

इतश्चास्ति मुख्यस्य प्राणस्य वैशेषिकं कार्यं, यत्कारणं पंचवृत्तिरयं व्यपदिश्यते श्रुतिषु 'प्राणोऽपानो व्यान उदानः समानः' इति । वृत्तिभेदश्चायं कार्यभेदापेक्षः । प्राणः प्राग्वृत्तिरुच्छ्वासादिकर्मा । अपानोऽवाग्वृत्तिः निश्वासादिकर्मा । व्यानस्तयोः संधौ वर्तमानो वीर्यवत्कर्महेतुः । उदान ध्र्ववृत्तिरुत्क्रान्त्यादिहेतुः । समानः समं सर्वेष्वंगेषु योऽन्नरसान्नय ीति । एवं पंचवृत्तिः प्राणो मनोवत् । यथा मन : पंच वृत्तयः एवं प्राणस्यापीत्यर्थः । श्रोत्रादिनिमित्ताः शब्दादिविषया मनसः पंच वृत्तयः प्रि द्धाः । ननु 'कामः संकल्पः' इत्याद्याः परिपठिताः परिगृह्येरन् । पंचसंख्यातिरेकात् । नन्वत्रापि श्रोत्रादिनिरपेक्षा भूतभविष्यदादिविषयाऽपरा मनसो वृत्तिरस्तीति समानः पंच ख्यातिरेकः । एवं तर्हि "परमतमप्रतिषिद्धमनुमतं भवति" इति न्यायादिहापि योगशास्त्रप्रसिद्धा मनसः पंचवृत्तयः परिगृह्यन्ते "प्रमाणविपर्ययविकल्पनिद्रास्मृतयः" नाम । बहुवृत्तित्वमात्रेण वा मनः प्राणस्य निदर्शनमिति द्रष्टव्यम् । जीवोपकरणत्वमपि प्राणस्य पंचवृत्तित्वात् मनोवादिति योजयितव्यम् ॥१२॥

### ६ श्रेष्ठाणुत्वाधिकरण । सू० १३ ।

## अणुश्च ॥१३॥

अणुश्चायं मुख्यः प्राणः प्रत्येतव्यः इतरप्राणवत् । अणुत्वं चेहापि ौक्ष्म्यपरिच्छेदौ न परमाणुतुल्यत्वम् । पंचाभिर्वृत्तिभिः कृत्स्नशरीरव्यापित्वात् । सूक्ष्मः प्राण उत्क्रान्तौ पार्श्वस्थेनानुपलभ्यमानत्वात् । परिच्छिन्नश्च उत्क्रान्तिगत्यागतिश्रुतिभ्यः । ननु विभुत्वमपि प्राणस्य समाम्नायते— 'समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः मोऽनेन वेंण' इत्येवमादिप्रदेशेषु । तदुच्यते— आधिदैविकेन समष्टिव्यष्टिरूपेण हैरण्यगर्भेण प्राणात्मनैव एतद्विभुत्वमाम्नायते नाध्यात्मिकेन । अपिच 'समः प्लुषिणा' इत्यादिना ाम्यवचनेन प्रतिप्राणिवर्तिनः प्राणस्य परिच्छेद एव प्रदर्श्यते । तस्माददोषः ॥१३॥

## ज्योतिराद्यधिकर ् । ू० १४-१६ ।

### ज्योतिराद्यधि नं तु तदामननात् ॥१४॥

ते पुनः प्रकृताः प्राणाः किं स्वमहिम्नैव स्वस्मै स्वस्मै कार्याय प्रभवन्ति, आहोस्विद्देवताधिष्ठिताः प्रभवन्तीति विचार्यते। तत्र प्राप्तं तावद्यथा स्वकार्यशक्तियोगात्स्वमहिम्नैव प्राणाः प्रवर्तेरन्निति। अपिच देवताधिष्ठिता ां प्राणानां प्रवृत्तावभ्युपगम्यमानायां तासामेवाधिष्ठात्रीणां देवतानां भोक्तृत्वप्रसंगाच्छारीरस्य भोक्तृत्वं प्रलीयेत। अतः स्वमहिम्नैवैषां प्रवृत्तिः इति। एवं प्राप्ते इदमुच्यते— ज्योतिराद्यधिष्ठानं तु इति। तु शब्देन पूर्वपक्षो व्यावर्त्यते। ज्योतिरादिभिः अग्न्याद्यभिमानिनीभिः देवताभिरधिष्ठितं वागादि करणजातं स्वकार्येषु प्रवर्तत इति प्रतिजानीते। हेतुं व्याचष्टे— तदामननादिति। तथाह्यामनन्ति— 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' इत्यादि। अग्नेश्चायं वाग्भावो मुखप्रवेशश्च देवतात्मना अधिष्ठातृत्वमंगीकृत्योच्यते। नहि देवतासंबंधं प्रत्याख्यायाग्नेर्वाचि मुखे वा कश्चिद्विशेषसंबंधो दृश्यते। तथा 'वायुः प्राणो भूत्वा नासिके प्राविशत्' इत्येवमाद्यपि योजयितव्यम्। तथान्यत्रापि 'वागेव ब्रह्मणश्चतुर्थः पादः सोऽग्निना ज्योतिषा भाति च तपति च' इत्येवमादिना वागादीनामग्न्यादिज्योतिष्ट्वादिवचनेन एतमेवार्थं द्रढयति। 'स वै वाचमेव प्रथमामत्यवहत्सा यदा मृत्युमत्यमुच्यत ोऽग्निरभवत्' इति चैवमादिना वागादीनामग्न्यादिभावापत्तिवचनेन एतमेवार्थं द्योतयति। सर्वत्र चाध्यात्माधिदैवतविभागेन वागाद्यग्न्याद्यनुक्रमणमनयैव प्रत्या त्या भवति। स्मृतावपि "वागध्यात्ममिति प्राहुर्ब्राह्मणास्तत्त्वदर्शिनः। वक्तव्यमधिभूतं तु वह्निस्तत्राधिदैवतम्।" इत्यादिना वागादीनां अग्न्यादिदेवताधिष्ठितत्वं सप्रपंचं प्रदर्शितम्। यदुक्तं स्वकार्यशक्तियोगात्स्वमहिम्नैव प्राणाः प्रवर्तेरन्निति। तदयुक्तम्। शक्तानामपि शकटादीनां अनड्डुहाद्यधिष्ठितानां प्रवृत्तिदर्शनात्। उभयथोपपत्तौ च आगमात् वागादीनां देवताधिष्ठितत्वमेव निश्चीयते ॥१४॥

यदप्युक्तं देवतानामेवाधिष्ठात्रीणां भोक्तृत्वप्रसंगो न शारीरस्येति, तत्परिह्रियते—

### प्राणवता शब्दात् ॥ ५॥

तीष्वपि प्राणानामधिष्ठात्रीषु देवतासु प्राणव । कार्यकरणसंघा - स्वामिना शारीरेणैवैषां प्राणानां संबंधः श्रुतेरवगम्यते । तथाहि श्रुतिः— 'अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुरथ यो वेदेदं जिघ्राणीति स आत्मा गंधाय घ्राणम्' इत्येवंजातीयका शारीरेणैव प्राणानां बंधं श्रावयति । अपिच अनेकत्वात्प्रतिकरणमधिष्ठात्रीणां देवतानां न भोक्तृत्वमस्मिञ्शरीरेऽवकल्पते । एको ह्येवमस्मिञ्शरीरे शारीरो भोक्ता प्रतिसंधानादिसंभवादवगम्यते ॥१५॥

तस्य च नित्यत्वात् ॥१६॥

तस्य च शारीरस्यास्मिञ्शरीरे भोक्तृत्वेन नित्यत्वं पुण्यपापोपलेपसंभवात्सुखदुःखोपभोगसंभवाच्च, न देवतानाम् । ता हि परस्मिन्नैश्वर्ये पदेऽवतिष्ठमाना न हीनेऽस्मिञ्शरीरे भोक्तृत्वं प्रतिलब्धुमर्हन्ति । श्रुतिश्च भवति— 'पुण्यमेवामुं गच्छति न ह वै देवान्पापं गच्छति' इति । शारीरेणैव च नित्यः प्राणानां संबंधः, उत्क्रान्त्यादिषु तदनुवृत्तिदर्शनात् । 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इत्यादिश्रुतिभ्यः। तस्मात्सतीष्वपि करणानां नियंत्रीषु देवतासु न शारीरस्य भोक्तृत्वमपगच्छति । करणपक्षस्यैव हि देवता न भोक्तृपक्षस्येति ॥१६॥

८ इंद्रियाधिकरणम् । सू० १७–१९ ।

त इंद्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥१७॥

मुख्यश्चैकः इतरे चैकादश प्राणा अनुक्रान्ताः । तत्रेदमपरं संदिह्यते— किं मुख्यस्यैव प्राणस्य वृत्तिभेदा इतरे प्राणाः, आहोस्वित्तत्त्वान्तराणीति । किं तावत्प्राप्तं, मुख्यस्यैवेतरे वृत्तिभेदा इति । कुतः? श्रुतेः । तथाहि श्रुतिर्मुख्यमितरांश्च प्राणान्संनिधाप्य मुख्यात्मतामितरेषां ख्यापयति— 'हंतास्यैव सर्वे रूपमसामेति त एतस्यैव सर्वे रूपमभवन्' इति । प्राणैकशब्दत्वाच्च एकत्वाध्यवसायः । इतरथा ह्यन्याय्यमनेकार्थत्वं प्राणशब्दस्य प्रसज्येत । एकत्र वा मुख्यत्वमितरत्र लाक्षणिकत्वमापद्येत । तस्माद्यथैकस्यैव प्राणस्य प्राणाद्याः पंच वृत्तयः एवं वागाद्या अप्येकादशेति । एवं प्राप्ते ब्रूमः— तत्त्वान्तराण्येव प्राणाद्वागादीनीति । कुतः? व्यपदेशभेदात् । कोऽयं व्यपदेशभेदः? ते प्रकृताः प्राणाः श्रेष्ठं वर्जयित्वावशि । एकादशे-

न्द्रियाणीत्युच्यन्ते । श्रुतावे व्यपदेशभेददर्शनात् । 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इति ह्येवंजातीयकेषु प्रदेशेषु पृथक्प्राणो व्यपदिश्यते, पृथक्चेन्द्रियाणि । ननु मनसोऽप्येवं सति वर्जनमिंद्रियत्वेन प्राणवत्स्यात्, 'मनः सर्वेन्द्रियाणि च' इति पृथग्व्यपदेशदर्शनात् । सत्यमेतत् । स्मृतौ तु एकादशेन्द्रियाणीति मनोऽपीन्द्रियत्वेन श्रोत्रादिवत् गृह्यते । प्राणस्य त्विंद्रियत्वं न श्रुतौ स्मृतौ वा प्रसिद्धमस्ति । व्यपदेशभेदश्चायं तत्त्वभेदपक्षे उपपद्यते । तत्त्वैकत्वे तु स एवैकः सन्प्राण इंद्रियव्यपदेशं लभते न लभते चेति विप्रतिषिद्धम् । तस्मात्तत्त्वान्तरभूता मुख्यादितरे ॥१७॥

कुतश्च तत्त्वान्तरभूताः—

**भेदश्रुतेः ॥१८॥**

भेदेन वागादिभ्यः प्राणः सर्वत्र श्रूयते— 'ते ह वाचमूचुः' इत्युपक्रम्य वागादीनसुरपाप्मविध्वस्तानुपन्यस्य उपसंहृत्य वागादिप्रकरणम् 'अथ हेममासन्यं प्राणमूचुः' इत्यसुरविध्वंसिनो मुख्यस्य प्राणस्य पृथगुपक्रमणात् । तथा 'मनो वाचं प्राणं तान्यात्मनेऽकुरुत' इत्येवमाद्या अपि भेदश्रुतयः उदाहर्तव्याः । तस्मादपि तत्त्वान्तरभूता मुख्यादितरे ॥१८॥

कुतश्च तत्त्वान्तरभूताः—

**वैलक्षण्याच्च ॥१९॥**

वैलक्षण्यं च भवति मुख्यस्येतरेषां च । सुप्तेषु वागादिषु मुख्य एको जागर्ति । स एव चैको मृत्युनाऽनाप्तः, आप्तास्त्वितरे । तस्यैव च स्थित्युत्क्रान्तिभ्यां देहधारणपतनहेतुत्वं, नेन्द्रियाणाम् । विषयालोचनहेतुत्वं चेन्द्रियाणां न प्राणस्य, इत्येवंजातीयको भूयांल्लक्षणभेदः प्राणेन्द्रियाणाम् । तस्मादप्येषां तत्त्वान्तरभावसिद्धिः । यदुक्तम्— 'त एतस्यैव सर्वे रूपमभवन्' इति श्रुतेः प्राण एवेन्द्रियाणीति, तदयुक्तम् । तत्रापि पौर्वापर्यालोचनाद्भेदप्रतीतेः । तथाहि— 'वदिष्याम्येवाहमिति वाग्दध्रे' इति वागादीनींद्रियाण्यनुक्रम्य 'तानि मृत्युः श्रमो भूत्वोपयेमे तस्माच्छ्राम्यत्येव वाक्' इति च श्रमरूपेण मृत्युना ग्रस्तत्वं वागादीनामभिधाय 'अथेममेव नाप्नोद्योऽयं मध्यमः प्राणः' इति पृथक्प्राणं मृत्युनानभिभूतं तमनुक्रामति । 'अयं वै नः श्रेष्ठः' इति च श्रेष्ठतामस्यावधारयति । तस्मात्तदविरोधेन वागादिषु

परिस्पंदलाभस्य प्राणायत्तत्वं, तद्रूपभवनं वा ादीनां इति मंतव्यं, न तादात्म्यम् । अतएव च प्राणशब्दस्यैंद्रियेषु लाक्षणिकत्वसि द्धिः । तथाच श्रुतिः 'त एतस्यैव सर्वे रूपमभवन् । तस्मादेत एतेनाख्यायन्ते प्राणाः' इति मुख्यप्राणविषयस्यैव प्राणशब्दस्यैंद्रियेषु लाक्षणिकीं वृत्तिं दर्शयति । तस्मात्तत्त्वान्तराणि प्राणाद्वागादीनि इंद्रियाणीति ॥१९॥

९ संज्ञामूर्तिक्लृप्त्यधिकरणम् । सू० २०–२२ ।

संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥२०॥

सत्प्रक्रियायां तेजोबन्नानां सृष्टिमभिधायोपदिश्यते— 'सेयं देवतैक्षत हंताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति । तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति' । तत्र संशयः— किं जीवकर्तृकमिदं नामरूपव्याकरणं आहोस्वित्परमेश्वरकर्तृकमिति । तत्र प्राप्तं तावत् जीवकर्तृकमेवेदं नामरूपव्याकरणमिति । कुतः? 'अनेन जीवेनात्मना' इति विशेषणात् । यथा लोके चारेणाहं परसैन्यमनुप्रविश्य संकलयानि, इत्येवंजातीयके प्रयोगे, चारकर्तृकमेव सत्सैन्यसंकलनं हेतुकर्तृत्वाद्राजा आत्मन्यध्यारोपयति संकलयानीत्युत्तमपुरुषप्रयोगेण, एवं जीवकर्तृकमेव सन्नामरूपव्याकरणं हेतुकर्तृत्वाद्देवता आत्मन्यध्यारोपयति व्याकरवाणीत्युत्तमपुरुषप्रयोगेण । अपिच डित्थडवित्थादिषु नामसु घटशरावादिषु च रूपेषु जीवस्यैव व्याकर्तृत्वं दृष्टम् । तस्माज्जीवकर्तृकमेवेदं नामरूपव्याकरणमित्येवं प्राप्ते अभिधत्ते— संज्ञामूर्तिक्लृप्तिस्तु इति । तु-शब्देन पक्षं व्यावर्तयति । संज्ञामूर्तिक्लृप्तिरिति नामरूपव्याक्रियेत्येतत् । त्रिवृत्कुर्वत इति परमेश्वरं लक्षयति, त्रिवृत्करणे तस्य निरपवादकर्तृत्वनिर्देशात् । येयं संज्ञाक्लृप्तिर्मूर्तिक्लृप्तिश्च अग्निरादित्यश्चंद्रमा विद्युदिति, तथा कुशकाशपलाशादिषु पशुमृगमनुष्यादिषु च प्रत्याकृति प्रतिव्यक्ति चानेकप्रकारा । सा खलु परमेश्वरस्यैव तेजोबन्नानां निर्मातुः कृतिर्भवितुमर्हति । कुतः? उपदेशात् । तथाहि 'सेयं देवतैक्षत' इत्युपक्रम्य 'व्याकरवाणि' इत्युत्तमपुरुषप्रयोगेण परस्यैव ब्रह्मणो व्याकर्तृत्वमिहोपदिश्यते । ननु जीवेनेति विशेषणाज्जीवकर्तृकत्वं व्याकरणस्य अध्यवसितम् । नैतदेवम् । जीवेन इत्येतत् अनुप्रविश्य इत्यनेन संबध्यते, आनंतर्यात्, न व्याकरवाणीत्यनेन । तेन हि संबधे व्याकरवाणीत्ययं देव-

ताविषय उत्तमपुरुष औपचारिकः कल्प्येत। नच गिरिनदीसमुद्रादिषु नानाविधेषु नामरूपेष्वनीश्वरस्य जीवस्य व्याकरणसामर्थ्यमस्ति। येष्वपि चास्ति सामर्थ्यं तेष्वपि परमेश्वरायत्तमेव त्। नच जीवो नाम परमेश्वरादत्यंतभिन्नश्चार इव राज्ञः, आत्मनेति विशेषणात्। उपाधिमात्रनिबंधनत्वाच्च जीवभावस्य। तेन, तत्कृतमपि नामरूपव्याकरणं परमेश्वरकृतमेव भवति। परमेश्वर एव च नामरूपयोर्व्याकर्तेति सर्वोपनिषत्सिद्धान्तः। 'आकाशो ह वै नाम नामरूपयोर्निर्वहिता' इत्यादिश्रुतिभ्यः। तस्मात्परमेश्वरस्यैव त्रिवृत्कुर्वतः कर्म नामरूपयोर्व्याकरणम्। त्रिवृत्करणपूर्वकमेवेदमिह नामरूपव्याकरणं विवक्ष्यते, प्रत्येकं नामरूपव्याकरणस्य तेजोबन्नोत्पत्तिवचनेनैवोक्तत्वात्। तच्च त्रिवृत्करणमग्न्यादित्यचंद्रविद्युत्सु श्रुतिर्दर्शयति— 'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य' इत्यादिना। तत्राग्निरितीदं रूपं व्याक्रियते। सति च रूपव्याकरणे विषयप्रतिलंभादग्निरितीदं नाम व्याक्रियते। एवमेवादित्यचंद्रविद्युत्स्वपि द्रष्टव्यम्। अनेन चाग्न्याद्युदाहरणेन भौमांभ तैजसेषु त्रिष्वपि द्रव्येष्वविशेषेण त्रिवृत्करणमुक्तं भवति। उपक्रमोपसंहारयोः साधारणत्वात्। तथाह्यविशेषेणैवोपक्रमः— 'इमास्तिस्रो देवतास्त्रिवृत्त्रिवृदेकैका भवति' इति। अविशेषेणैव चोपसंहारः— 'यदु रोहितमिवाभूदिति तेजसस्तद्रूपम्' इत्येवमादिः, यद्वाविज्ञातमिवाभूदित्येतामेव देवतानां समासः' इति एवमंतः ॥२०॥

तासां तिसृणां देवतानां बहिस्त्रिवृत्कृतानां सतीनामध्यात्ममपरं त्रिवृत्करणमुक्तम्— 'इमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति' इति। तदिदानीमाचार्यो यथाश्रुत्येवोपदर्शयति आशंकितं कंचिद्दोषं परिहरिष्यन्—

**मांसादि भौमं यथाशब्दमितरयोश्च ॥२१॥**

भूमेस्त्रिवृत्कृतायाः पुरुषेणोपभुज्यमानाया मां ादिकार्यं यथाशब्दं निष्पद्यते। तथाहि श्रुतिः— अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मनः' इति। त्रिवृत्कृता भूमिरेवैषा व्रीहियवाद्यन्नरूपेणाद्यत इत्यभिप्रायः। तस्याश्च स्थविष्ठं रूपं पुरीषभावेन बहिर्निर्गच्छति। मध्यममध्यात्मं मांसं वर्धयति। अणि

तु मनः । एवमितरयोरस्तेजसोर्यथाशब्दं कार्यमवगंतव्यम् । एवं मूत्रं लोहितं प्राणश्चापां कार्यम् । अस्थि मज्जा वाक्तेजस इति ॥२१॥

अत्राह— यदि सर्वमेव त्रिवृत्कृतं भूतभौतिकं अविशेषश्रुतेः 'तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' इति । किंकृतस्तर्ह्ययं विशेषव्यपदेशः 'इदं तेज इमा आप इदमन्नं' इति? तथा अध्यात्मं इदमन्नस्याशितस्य कार्यं मांसादि । इदमपां पीतानां कार्यं लोहितादि । इदं तेजसोऽशितस्य कार्यमस्थ्यादि इति? अत्रोच्यते—

वैशेष्यात्तु तद्वादस्तद्वादः ॥२२॥

तु-शब्देन चोदितं दोषमपनुदाते । विशेषस्य भावो वैशेष्यम् । भूयस्त्वमिति यावत् । सत्यपि त्रिवृत्करणे क्वचित्कस्यचिद्भूतधातोर्भूयस्त्वमुपलभ्यते 'अग्नेस्तेजोभूयस्त्वमुदकस्याब्भूयस्त्वं पृथिव्या अन्नभूयस्त्वम्' इति । व्यवहारप्रसिद्ध्यर्थं चेदं त्रिवृत्करणम् । व्यवहारश्च त्रिवृत्कृतरज्जुवदेकत्वापत्तौ सत्यां न भेदेन भूतत्रयगोचरो लोकस्य प्रसिध्येत् । तस्मात्सत्यपि त्रिवृत्करणे वैशेष्यादेव तेजोबन्नविशेषवादो भूतभौतिकविषय उपपद्यते । तद्वादस्तद्वाद इति पदाभ्यासोऽध्यायपरिसमाप्तिं द्योतयाति ॥२२॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविंदभगवत्पूज्यपादाशिष्यस्य श्रीशंकरभगवतः कृतौ शारीरकमीमांसाभाष्ये द्वितीयाध्यायस्य चतुर्थः पादः ॥

इति श्रीमद्ब्रह्मसूत्रशांकरभाष्येऽविरोधाख्यो द्वितीयोऽध्यायः ॥

# तत ऽध्यायः



## तृतीयाध्याये थम पादः ।



तदंतरप्रतिपत्त्या रणम् । सू० १- ।

तदंतरप्रतिपत्तौ रंह संपरिष्व ः प्रश्ननिरूपणाभ्या ॥१॥

द्वि येऽध्याये स्मृतिन्यायविरोधो वेदान्तविहिते ब्रह्मदर्शने परिहृतः । परपक्षाणां चानपेक्षत्वं प्रपंचितम् । श्रुतिविप्रतिषेधश्च परिहृ ः । तत्र च जीवव्यतिरिक्तानि तत्त्वानि जीवोपकरणानि ब्रह्मणो जायन्त इत्युक्तम् । अथेदानीं उपकरणोपहितस्य जीवस्य संसारगतिप्रकारः तदवस्थान्तराणि ब्र सतत्त्वं विद्याभेदाभेदौ गुणोपसंहारानुपसंहारौ सम्यग्दर्शनात्पुरुषार्थसिद्धिः सम्यग्दर्शनोपायविधिप्रभेदो मुक्तिफलानियमश्च, इत्येतदर्थजातं तृतीयेऽध्याये निरूपयिष्यते । प्र गागतं च किमप्यन्यत् । तत्र प्रथमे तावत्पादे पंचाग्निविद्यामाश्रित्य सं ारगतिप्रभेदः प्रदर्श्यते वैराग्यहेतोः । 'तस्माज्जुगुप्सेत' इति चान्ते श्रवणात् । जीवो मुख्यप्राण चिवः सेंद्रियः समनस्कोऽविद्याकर्मपूर्वप्रज्ञापरिग्रहः पूर्वदेहं विहाय देहान्तरं प्रतिपद्यत इत्येतदवगतम् । 'अथैनमेते प्राणा अभिसमायन्ति' इत्येवमादेः 'अन्यन्नवतरं कल्याणतरं रूपं कुरुते' इत्येवमंतात्संसारप्रकरणस्थाच्छब्दात् । धर्माधर्मफलोपभोग भवाच्च । किं देहबीजैर्भूतसूक्ष्मैः असंपरिष्वक्तो गच्छति आहोस्वित्संपरिष्वक्त इति चिंत्यते ॥

किं तावत्प्राप्तम् । असंपरिष्वक्त इति । कुतः? करणोपादानवद्भूतोपादानस्याश्रुतत्वात् । ' एतास्तेजोमात्राः समभ्याददानः' इति ह्यत्र तेजोमात्राशब्देन करणानामुपादानं कीर्तयति । वाक्यशेषे चक्षुरादि कीर्तनात् । नैवं भूतमात्रोपादानसंकीर्तनमस्ति । सुलभाश्च सर्वत्र भूतमात्राः । यत्रैव देह आरब्धव्यस्तत्रैव न्ति । ततश्च तासां नयनं निष्प्रयोजनम् । तस्माद परिष्वक्तो यातीति । एवं प्राप्ते पठत्याचार्यः—

तदंतरप्रतिपत्तौ रंहति परिष्वक्त इति । तदंतरप्रतिपत्तौ देहान्तर-

प्रतिपत्तौ देहबीजैर्भूतसूक्ष्मैः 'परिष्वक्तो रंहति गच्छतीत्यवगंतव्यम् । कुतः? प्रश्ननिरूपणाभ्याम् । तथाहि प्रश्नः— 'वेत्थ यथा पंचम्यामाहुता ।पः पुरुषवच ।ो भवन्ति' इति । निरूपणं च प्रतिवचनं, द्युपर्जन्यपृथिवीपुरुषयोषित्सु पंचस्वग्निषु श्रद्धासोमवृ ्यन्नरेतोरूपाः पंचाहुतीर्दर्शयित्वा 'इति तु पंचम्यामाहुतावापः पुरुषवचसो भवन्ति' इति । तस्मादद्भिः परिवेष्टितो जीवो रंहति व्रजतीति गम्यते । नन्वन्या श्रुतिर्जलूकावत्पूर्वदेहं न मुंचति यावन्न देहान्तरमाक्रमतीति दर्शयति— 'तद्यथा तृणजलायुका' इति । तत्राप्यप्परिवेष्टितस्यैव जीवस्य कर्मोपस्थापितप्रतिपत्तव्यदेहविषयभावनादीर्घीभावमात्रं जलूकयोपमीयत इत्यविरोधः । एवं श्रुत्युक्ते देहान्तरप्रतिपत्तिप्रकारे ति, याः पुरुषमतिप्रभवाः कल्पना व्यापिनां करणानामात्मनश्च देहान्तरप्रतिपत्तौ कर्मवशात् वृत्तिलाभस्तत्र भवति । केवलस्यैवात्मनो वृत्तिलाभस्तत्र भवति । इंद्रियाणि तु देहवदभिनवान्येव तत्र तत्र भोगस्थाने उत्पद्यन्ते । मन एव वा केवलं भोगस्थानमभिप्रतिष्ठते । जीव एव वोत्प्लुत्य देहाद्देहान्तरं प्रतिपद्यते शुक इव वृक्षात् वृक्षान्तरम् । इत्येवमाद्याः । ताः सर्वा एवानादर्तव्याः श्रुतिविरोधात् ॥१॥

ननु उदाहृताभ्यां प्रश्नप्रतिवचनाभ्यां केवलाभिरद्भिः संपरिष्वक्तो रंहतीति प्राप्नोति । अप्शब्दश्रवणसामर्थ्यात् । तत्र कथं सामान्येन प्रतिज्ञायते सर्वैरेव भूतसूक्ष्मैः संपरिष्वक्तो रंहतीति? अत उत्तरं पठति—

त्र्यात्मकत्वात्तु भूयस्त्वा ् ॥२॥

तु-शब्देन चोदितामाशंकामुच्छिनत्ति । त्र्यात्मिका ह्यापः, त्रिवृत्करणश्रुतेः । तास्वारंभिकास्वभ्युपगतासु इतरदपि भूतद्वयमवश्यमभ्युपगंतव्यं भवति । त्र्यात्मकश्च देहस्त्रयाणामपि तेजोबन्नानां तस्मिन्कार्योपलब्धेः । पुनश्च त्र्यात्मकस्त्रिधातुत्वात्त्रिभिर्वातपित्तश्लेष्माभिः । न स भूतांतराणि प्रत्याख्याय केवलाभिरद्भिरारब्धुं शक्यते । तस्मात् भूयस्त्वापेक्षोऽयं 'आपः पुरुषवचसः' इति । प्रश्नप्रतिवचनयोरप्शब्दो, न कैवल्यापेक्षः । सर्वदेहेषु हि रसलोहितादिद्रवद्रव्यभूयस्त्वं दृश्यते । ननु पार्थिवो धातुर्भूयिष्ठो देहेषूपलक्ष्यते । नैष दोषः । इतरापेक्षयाप्यपां बाहुल्यं भविष्यति । दृश्यते च शुक्रशोणितलक्षणेऽपि देहबीजे द्रवबाहुल्यम् । कर्म च निमित्तकारणं देहां-

तरारंभे । कर्माणि चाग्निहोत्रादीनि गोमाज्यपयःप्रभृतिद्रवद्रव्यव्यपाश्रयाणि । कर्मसमवायिन्यश्चापः श्रद्धाशब्दोदिताः सह कर्मभिर्द्युलोकाख्येऽग्नौ हूयन्त इति वक्ष्यति । तस्मादप्यपां बाहुल्यप्रसिद्धिः । बाहुल्याच्चाप्शब्देन सर्वेषामेव देहबीजानां भूतसूक्ष्माणामुपादानमिति निरवद्यम् ॥२॥

प्राणगतेश्च ॥३॥

प्राणानां च देहांतरप्रतिपत्तौ गतिः श्राव्यते— 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इत्यादिश्रुतिभिः । सा च प्राणानां गतिर्नाश्रयमंतरेण संभवतीत्यतः प्राणगतिप्रयुक्ता तदाश्रयभूतानामपामपि भूतान्तरोपसृष्टानां गतिरवगम्यते । नहि निराश्रयाः प्राणाः क्वचिद्गच्छन्ति तिष्ठन्ति वा जीवतो दर्शनात् ॥३॥

अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥४॥

स्यादेतत् । नैव प्राणा देहान्तरप्रतिपत्तौ सह जीवेन गच्छन्ति, अग्न्यादिगतिश्रुतेः । तथाहि श्रुतिर्मरणकाले वागादयः प्राणा अग्न्यादीन्देवान्गच्छन्तीति दर्शयति 'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणः' इत्यादिनेति चेत् । न । भाक्तत्वात् । वागादीनामग्न्यादिगतिश्रुतिर्गौणी लोमसु केशेषु चादर्शनात् । 'ओषधीर्लोमानि वनस्पतीन्केशाः' इति हि तत्राम्नायते । नहि लोमानि केशाश्च उत्प्लुत्य ओषधीर्वनस्पतींश्च गच्छन्तीति भवति । नच जीवस्य प्राणोपाधिप्रत्याख्याने गमनमवकल्पते । नापि प्राणैर्विना देहान्तर उपभोग उपपद्यते । विस्पष्टं च प्राणानां सह जीवेन गमनमन्यत्र श्रावितम् । अतो वागाद्यधिष्ठात्रीणां अग्न्यादिदेवतानां वागाद्युपकारिणीनां मरणकाले उपकारनिवृत्तिमात्रमपेक्ष्य वागादयोऽग्न्यादीन्गच्छन्तीत्युपचर्यते ॥४॥

प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥५॥

स्यादेतत् । कथं पुनः 'पंचम्यामाहुतावापः पुरुषवचसो भवन्ति' इत्येतन्निर्धारयितुं पार्यते । यावता नैव प्रथमेऽग्नावपां श्रवणमस्ति? इह हि द्युलोकप्रभृतयः पंचाग्नयः पंचानामाहुतीनां आधारत्वेनाधीताः । तेषां च प्रमुखे 'असौ वाव लोको गौतमाग्निः' इत्युपन्यस्य 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति' इति श्रद्धा हौम्यद्रव्यत्वेन आवेदिता । न तत्रापो होम्यद्रव्य-

तया श्रुताः । यदि नाम पर्जन्यादिषूत्तरेषु चतुर्ष्वग्निष्वपां हौम्यद्रव्यता परिकल्प्येत परिकल्प्यतां नाम । तेषु होतव्यतयोपात्तानां सोमादीनामब्बहुलत्वोपपत्तेः । प्रथमे त्वग्नौ श्रुतां श्रद्धां परित्यज्याश्रुता आपः परिकल्प्यन्त इति साहसमेतत् । श्रद्धा च नाम प्रत्ययविशेषः, प्रसिद्धिसामर्थ्यात् । तस्मात् अयुक्तः पंचम्यामाहुतावपां पुरुषभाव इति चेत् । नैष दोषः । यतस्तत्रापि प्रथमेऽग्नौ ता एवापः श्रद्धाशब्देनाभिप्रेयन्ते । कुतः? उपपत्तेः । एवं हि आदिमध्यावसानसंगानात् अनाकुलमेतदेकवाक्यमुपपद्यते । इतरथा पुनः पंचम्यामाहुतावपां पुरुषवचस्त्वप्रकारे पृष्टे, प्रतिवचनावसरे प्रथमाहुतिस्थाने यद्यनपो हौम्यद्रव्यं श्रद्धां नामावतारयेत्ततः अन्यथा प्रश्नोऽन्यथा प्रतिवचनं इत्येकवाक्यता न स्यात् । 'इति तु पंचम्यामाहुतावापः पुरुषवचसो भवन्ति' इति चोपसंहरन्नेतदेव दर्शयति । श्रद्धाकार्यं च सोमवृष्ट्यादि स्थूलीभवदब्बहुलं लक्ष्यते । सा च श्रद्धाया अप्त्वे युक्तिः । कारणानुरूपं हि कार्यं भवति । नच श्रद्धाख्यः प्रत्ययो मनसो जीवस्य वा धर्मः सन्धर्मिणो निष्कृष्य होमायोपादातुं शक्यते पश्वादिभ्य इव हृदयादीनीति, आप एव श्रद्धाशब्दा भवेयुः । श्रद्धाशब्दश्चाप्सूपपद्यते, वैदिकप्रयोगदर्शनात् "श्रद्धा वा आपः" इति । तनुत्वं श्रद्धासारूप्यं गच्छन्त्य आपो देहबीजभूता इत्यतः श्रद्धाशब्दाः स्युः । यथा सिंहपराक्रमो नरः सिंहशब्दो भवति । श्रद्धापूर्वककर्मसमवायाच्चाप्सु श्रद्धाशब्द उपपद्यते, मंचशब्द इव पुरुषेषु । श्रद्धाहेतुत्वाच्च श्रद्धाशब्दोपपत्तिः "अपो हास्मै श्रद्धां संनमन्ते पुण्याय कर्मणे" इति श्रुतेः ॥५॥

## अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥६॥

अथापि स्यात् । प्रश्नप्रतिवचनाभ्यां नामापः श्रद्धादिक्रमेण पंचम्यामाहुतौ पुरुषाकारं प्रतिपद्येरन् । नतु तत्संपरिष्वक्ता जीवा रंहेयुः । अश्रुतत्वात् । नह्यत्र अपामिव जीवानां श्रावयिता कश्चिच्छब्दोऽस्ति । तस्मात् 'रंहति संपरिष्वक्तः' इत्ययुक्तमिति चेत् । नैष दोषः । कुतः? इष्टादिकारिणां प्रतीतेः । 'अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति' इत्युपक्रम्येष्टादिकारिणां धूमादिना पितृयाणेन पथा चंद्रप्राप्तिं कथयति 'आकाशाचंद्रम मेष सोमो राजा' इति । त एवेहापि प्रतीयन्ते

'तास्मिन्नेतास्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा संभवति' इति श्रुतिसामान्यात्। तेषां च अग्निहोत्रदर्शपूर्णमासादिकर्मसाधनभूता दधिपयःप्रभृतयो द्रवद्रव्यभूयस्त्वात्प्रत्यक्षमेव आपः न्ति। ता आहवनीये हुताः सूक्ष्मा आहुत्योऽपूर्वरूपाः सत्यः ानिष्टादिकारिणः आश्रयन्ति। तेषां च शरीरं नैधनेन विधानेनांत्येऽग्नावृत्विजो जुह्वति "असौ स्वर्गाय लोकाय स्वाहा" इति। ततस्ताः श्रद्धापूर्वककर्मसमवायिन्यः आहुतिमय्य आपोऽपू -रूपाः सत्यस्तानिष्टादिकारिणो जीवान्परिवेष्ट्य अमुं लोकं फलदानाय नयन्तीति यत्तदत्र जुहोतिना अभिधीयते— 'श्रद्धां जुह्वति' इति। थाचाग्निहोत्रे षट्प्रश्नीनिर्वचनरूपेण वाक्यशेषेण 'ते वा एते आहुती हुते उत्क्रामतः' इत्येवमादिनाग्निहोत्राहुत्योः फलारंभाय लोकान्तरप्राप्तिः प्रदर्शिता। तस्मादाहुतिमयीभिरद्भिः संपरिष्वक्ता जीवा रंहन्ति स्वकर्मफलोपभोगायेति श्लिष्यते ॥६॥

कथं पुनरिदमिष्टादिकारिणां स्वकर्मफलोपभोगाय रंहणं प्रतिज्ञायते। यावता षां धूमप्रतीकेन वर्त्मना चंद्रमसमधिरूढानामन्नभावं दर्शयति— 'एष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति' इति 'ते चंद्रं प्राप्यान्नं भवन्ति तांस्तत्र देवा यथा सोमं राजानमाप्यायस्वापक्षीयस्वेत्येवमेतांस्तत्र भक्षयन्ति' इति च समानविषयं श्रुत्यंतरम्। नच व्याघ्रादिभिरिव देवैर्भक्ष्यमाणानामुपभोगः संभवतीति। अत उत्तरं पठति—

**भाक्तं वानात्मवित्त्वात्तथाहि दर्शयति ॥७॥**

वा-शब्दश्चोदितदोषव्यावर्तनार्थः। भाक्तमेषामन्नत्वं न मुख्यम्। मुख्ये ह्यन्नत्वे 'स्वर्गकामो यजेत' इत्येवंजातीयकाधिकारश्रुतिरुपरुध्येत। चंद्रमंडले चेत् इष्टादिकारिणामुपभोगो न स्यात्किमर्थमधिकारिण इष्टाद्यायासबहुलं कर्म कुर्युः ? अन्नशब्दश्च उपभोगहेतुत्वसामान्यादनन्नेऽप्युपचर्यमाणो दृश्यते। यथा विशोऽन्नं राज्ञां पशवोऽन्नं विशामिति। तस्मादिष्टस्त्रीपुत्रमित्रभृत्यादिभिरिव गुणभावोपगतैः इष्टादिकारिभिः यत्सुखविहरणं देवानां तदेवैषां भक्षणमभिप्रेतं न मोदकादिवच्चर्वणं निगरणं वा। 'न ह वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति' इति च देवानां चर्वणादिव्यापारं वारयति। तेषां च इष्टादिकारिणां देवान्प्रति गुणभावोपगतानाम-

प्युपभोग उपपद्यते, राजोपजीविनामिव परिजनानाम्। अनात्मवित्त्वाच्च इष्टादिकारिणां देवोपभोग्यभा उपपद्यते । तथाहि श्रुतिरनात्मविदां देवोपभोग्यतां दर्शयति— 'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न वेद यथा पशुरेवं स देवानाम्' इति । स चास्मिन्नपि लोके इष्टादिभिः कर्मभिः प्रीणयन्पशुवद्देवानामुपकरोति, अमुष्मिन्नपि लोके तदुपजीवी तदादि फलमुपभुंजानः पशुवदेव देवानामुपकरोतीति गम्यते ॥

अनात्मवित्त्वात्तथाहि दर्शयतीत्यस्यापरा व्याख्या— अनात्मविदो ह्येते केवलकर्मिण इष्टादिकारिणो, न ज्ञानकर्मसमुच्चयानुष्ठायिनः। पंचाग्निविद्यामिह आत्मविद्येत्युपचरन्ति, प्रकरणात् । पंचाग्निविज्ञानविहीनत्वाच्च इदमिष्टादिकारिणां गुणवादेन अन्नत्वमुद्भाव्यते, पंचाग्निविज्ञानप्रशं यै । पंचाग्निविद्या हीह विवित्सिता । वाक्यतात्पर्यावगमात् । तथाहि श्रुत्यंतरं चंद्रमंडले भोगसद्भावं दर्शयति— 'स सोमलोके विभूतिमनुभूय पुनरावर्तते' इति । तथान्यदपि श्रुत्यंतरम् 'अथ ये शतं पितॄणां जितलोकानामानंदाः स एकः कर्मदेवानामानंदो ये कर्मणा देवत्वमभिसंपद्यन्ते' इति इष्टादिकारिणां देवैः सह संवसतां भोगप्राप्तिं दर्शयति । एवं भाक्तत्वादन्नभाववचनस्य इष्टादिकारिणोऽत्र जीवा रंहन्तीति प्रतीयते । तस्मात् 'रंहति संपरिष्वक्तः' इति युक्तमेवोक्तम् ॥७॥

२ तात्ययाधिकरणम् । सू० ८–११ ।

तात्ययेऽनुशयवान्दृष्टस्मृतिभ्यां यथेतमनेवं च ॥८॥

इष्टादिकारिणां धूमादिना वर्त्मना चंद्रमंडलमधिरूढानां भुक्तभोगानां ततः प्रत्यवरोहः आम्नायते— 'तस्मिन्यावत्संपातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतम्' इत्यारभ्य, यावत् रमणीयचरणा ब्राह्मणादियोनिमापद्यन्ते कपूयचरणाः श्वादियोनिमिति । तत्रेदं विचार्यते— किं निरनुशया भुक्तकृत्स्नकर्माणोऽवरोहन्ति, आहोस्वित्सानुशया इति । किं तावत्प्राप्तम् ? निरनुशया इति । कुतः ? यावत्संपातमिति विशेषणात् । संपातशब्देनात्र कर्माशय उच्यते, संपतन्त्यनेनास्माल्लोकादमुं लोकं फलोपभोगायेति । यावत्संपातमुषित्वेति च कृत्स्नस्य तस्य कृतस्य तत्रैव भुक्ततां दर्शयति । 'तेषां यदा तत्पर्यवै' इति च श्रुत्यंतरेणैष एवार्थः प्रदर्श्यते । स्यादेतत् । याव-

दमुष्मिंल्लोके उपभोक्तव्यं कर्म तावदुपभुंक्ते इति कल्पयिष्यामीति । नैवं कल्पयितुं शक्यते यत्किंचेत्यन्यत्र परामर्शात् । 'प्राप्यान्तं कर्मणस्तस्य यत्किंचेह करोत्ययम् । तस्माल्लोकात्पुनरैत्यस्मै लोकाय कर्मणे' इति ह्यपरा श्रुतिः। यत्किंचेत्यविशेषपरामर्शेन कृत्स्नस्येह कृ स्य कर्मणस्तत्र क्षयिततां दर्शयति । अपिच प्रायणमनारब्धफलस्य कर्मणोऽभिव्यंजकम् । प्राक्प्रायणादारब्धफलेन कर्मणा प्रतिबद्धस्याभिव्यक्त्यनुपपत्तेः । तच्चाविशेषाद्यावत्किंचिदनारब्धफलं तस्य सर्वस्याभिव्यंजकम् । नहि साधारणे निमित्ते नैमित्तिकमसाधारणं भवितुमर्हति । न ह्यविशिष्टे प्रदीपसंनिधौ घटोऽभिव्यज्यते न पट इत्युपपद्यते । तस्मान्निरनुशया अवरोहन्तीत्येवं प्राप्ते ब्रूमः— कृतात्ययेऽनुशयवानिति । येन कर्मवृंदेन चंद्रमसमारूढाः फलोपभोगाय तस्मिन्नुपभोगेन क्षयिते, तेषां यदम्मयं शरीरं चंद्रमस्युपभोगायारब्धं तदुपभोगक्षयदर्शनशोकाग्निसंपर्कात्प्रविलीयते । सवितृकिरणसंपर्कादिव हिमकरकाः । हुतभुगर्चिःसंपर्कादिव च घृतकाठिन्यम् । ततः कृतात्यये कृतस्येष्टादेः कर्मणः फलोपभोगेनोपक्षये सति सानुशया एवेममवरोहन्ति । केन हेतुना ? दृष्टस्मृतिभ्यामित्याह । तथाहि प्रत्यक्षा श्रुतिः सानुशयानामवरोहं दर्शयति— 'तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वाथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरञ्श्वयोनिं वा सूकरयोनिं वा चंडालयोनिं वा' इति । चरणशब्देनानुशयः सूच्यत इति वर्णयिष्यति । दृष्टश्चायं जन्मनैव प्रतिप्राण्युच्चावचरूप उपभोगः प्रविभज्यमान आकस्मिकत्वासंभवादनुशयसद्भावं सूचयति, अभ्युदयप्रत्यवाययोः सुकृतदुष्कृतहेतुत्वस्य सामान्यतः शास्त्रेणावगमितत्वात् । स्मृतिरपि "वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुःश्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते" इति सानुशयानामेवावरोहं दर्शयति ॥

कः पुनरनुशयो नामेति ? केचित्तावदाहुः— स्वर्गार्थस्य कर्मणो भुक्तफलस्यावशेषः कश्चिदनुशयो नाम, भांडानुसारिस्नेहवत् । यथाहि स्नेहभांडं रिच्यमानं न सर्वात्मना रिच्यते, भांडानुसार्येव कश्चित्स्नेहशेषोऽवतिष्ठते, तथाऽनुशयोऽपीति । ननु कार्यविरोधित्वाददृष्टस्य न भुक्तफलस्यावशे-

षावस्थानं न्याय्यम् । नायं दोषः । नहि सर्वात्मना भुक्तफलत्वं कर्मणः प्रतिजानीमहे । ननु निरवशेषकर्मफलोपभोगाय चंद्रमंडलमारूढाः । बाढम् । तथापि स्वल्पकर्मावशेषमात्रेण तत्रावस्थातुं न लभ्यते । यथा किल कश्चित् सेवकः सकलैः सेवोपकरणै राजकुलमुपसृतः चिरप्रवासात्परिक्षीणबहूपकरणः छत्रपादुकादिमात्रावशेषो न राजकुलेऽवस्थातुं शक्नोति । एवमनुशयमात्रपरिग्रहो न चंद्रमंडलेऽवस्थातुं शक्नोतीति ॥

नचैतद्युक्तमिव । नहि स्वर्गार्थस्य कर्मणो भुक्तफलस्यावशेषानुवृत्तिरुपपद्यते, कार्यविरोधित्वादित्युक्तम् । नन्वेतदप्युक्तम् । न स्वर्गफलस्य कर्मणो निखिलस्य भुक्तफलत्वं भविष्यतीति । तदेतदपेशलम् । स्वर्गार्थं किल कर्म स्वर्गस्थस्यैव स्वर्गफलं निखिलं न जनयति, स्वर्गच्युतस्यापि कंचित्फललेशं जनयतीति । न शब्दप्रमाणकानामीदृशी कल्पना अवकल्पते । स्नेहभांडे तु स्नेहलेशानुवृत्तिर्दृष्टत्वादुपपद्यते । तथा सेवकस्योपकरणलेशानुवृत्तिश्च दृश्यते। नत्विह तथा स्वर्गफलस्य कर्मणो लेशानुवृत्तिर्दृश्यते, नापि कल्पयितुं शक्यते, स्वर्गफलत्वशास्त्रविरोधात् । अवश्यं चैतदेवं विज्ञेयम् । न स्वर्गफलस्येष्टादेः कर्मणो भांडानुसारिस्नेहवदेकदेशोऽनुवर्तमानोऽनुशय इति । यदिहि येन सुकृतेन कर्मणेष्टादिना स्वर्गमन्वभूवंस्तस्यैव कश्चिदेकदेशोऽनुशयः कल्प्येत, ततो रमणीय एवैकोऽनुशयः स्यान्न विपरीतः । तत्रेयमनुशयविभागश्रुतिः उपरुध्येत— 'तद्य इह रमणीयचरणाः...अथ य इह कपूयचरणाः' इति । तस्मादामुष्मिकफले कर्मजाते उपभुक्तेऽवशिष्टमैहिकफलं कर्मान्तरजातमनुशयः तद्वन्तोऽवरोहन्तीति ॥

यदुक्तं यत्किंच इत्यविशेषपरामर्शात्सर्वस्येह कृतस्य कर्मणः फलोपभोगेनान्तं प्राप्य निरनुशया अवरोहन्तीति । नैतदेवम् । अनुशयसद्भावस्यावगमितत्वात् । यत्किंचिदिह कृतमामुष्मिकफलं कर्म आरब्धभोगं, तत्सर्वं फलोपभोगेन क्षपयित्वेति गम्यते । यदप्युक्तं प्रायणमविशेषादनारब्धफलं कृत्स्नमेव कर्माभिव्यनक्ति, तत्र केनाचित्कर्मणाऽमुष्मिंल्लोके फलमारभ्यते, केनाचिदस्मिन्नित्ययं विभागो न संभवतीति । तदप्यनुशयसद्भावप्रतिपादनेनैव प्रत्युक्तम् । अपिच केन हेतुना प्रायणमनारब्धफलस्य कर्मणोऽभिव्यंजकं प्रतिज्ञायत इति वक्तव्यम् । आरब्धफलेन मणा प्रतिबद्धस्येतरस्य

वृत्त्युद्भवानुपपत्तेः तदुपशमात्प्रायणकाले वृत्त्युद्भवो भवतीति यद्युच्येत। ततो वक्तव्यम्। यथैव तर्हि प्राक्प्रायणादारब्धफलेन कर्मणा प्रतिबद्धस्येतरस्य वृत्त्युद्भवानुपपत्तिरित्येवं प्रायणकालेऽपि विरुद्धफलस्यानेकस्य कर्मणो युगपत्फलारंभा भवाद्बलवता प्रतिबद्धस्य दुर्बलस्य वृत्त्युद्भवानुपपत्तिरिति। नह्यनारब्धफलत्वसामान्येन जात्यंतरोपभोग्यफलमप्यनेकं कर्म एकस्मिन्प्रायणे युगपदभिव्यक्तं सदेकां जातिमारभत इ शक्यं वक्तुं, प्रतिनियतफलत्वविरोधात्। नापि कस्यचित्कर्मणः प्रायणेऽभिव्यक्तिः कस्यचिदुच्छेद इति शक्यते वक्तुम्। ऐकान्तिकफलत्वविरोधात्। नहि प्रायश्चित्तादिभिर्हेतुभिर्विना कर्मणामुच्छेदः भाव्यते। स्मृतिरपि विरुद्धफलेन कर्मणा प्रतिबद्धस्य कर्मान्तरस्य चिरमवस्थानं दर्शयति— "कदाचित्सुकृतं कर्म कूटस्थमिह तिष्ठति। मज्जमानस्य संसारे यावद्दुःखाद्विमुच्यते॥" इत्येवंजातीयका। यदि च कृत्स्नमनारब्धफलं कर्म एकस्मिन्प्रायणेऽभिव्यक्तं सदेकां जातिमारभेत, ततः स्वर्गनरकतिर्यग्योनिषु अधिकारानवगमाद्धर्माधर्मानुत्पत्तौ निमित्ताभावान्नोत्तरा जातिरुपपद्येत। ब्रह्महत्यादीनां चैकैकस्य कर्मणोऽनेकजन्मनिमित्तत्वं स्मर्यमाणमुपरुध्येत। नच धर्माधर्मयोः स्वरूपफलसाधनादिसमधिगमे शास्त्रादतिरिक्तं कारणं शक्यं संभावयितुम्। नच दृष्टफलस्य कर्मणः कारीर्यादेः प्रायणमभिव्यंजकं संभवतीति अव्यापिकाऽपीयं प्रायणस्याभिव्यंजकत्वकल्पना। प्रदीपोपन्यासोऽपि कर्मबलाबलप्रदर्शनेनैव प्रतिनीतः। स्थूलसूक्ष्मरूपाभिव्यक्त्यनभिव्यक्तिवच्चेदं द्रष्टव्यम्। यथाहि प्रदीपः समानेऽपि निधाने स्थूलं रूपमभिव्यनक्ति, न सूक्ष्मम्। एवं प्रायणं समानेऽप्यनारब्धफलस्य कर्मजातस्य प्राप्तावसरत्वे बलवतः कर्मणो वृत्तिमुद्भावयति, न दुर्बलस्येति। तस्मात् श्रुतिस्मृतिन्यायाविरोधात् अश्लिष्टोऽयमशेषकर्माभिव्यक्त्यभ्युपगमः। शेषकर्मसद्भावेऽनिर्मोक्षप्रसंग इत्ययमप्यस्थाने संभ्रमः। सम्यग्दर्शनादशेषकर्मक्षयश्रुतेः। तस्मात्स्थितमेतदेव अनुशयवन्तोऽवरोहन्तीति। ते चावरोहन्तो यथेतमनेवं चावरोहन्ति। यथेतमिति यथागतमित्यर्थः। अनेवमिति तद्विपर्ययेणेत्यर्थः। धूमाकाशयोः पितृयाणेऽध्वन्युपात्तयोः अवरोहे संकीर्तनात् यथेतंशब्दाच्च यथागतमिति प्रतीयते। रात्र्याद्यसंकीर्तनात् अभ्राद्युपसंख्यानाच्च विपर्ययोऽपि प्रतीयते॥८॥

चर ादिति चे ोपल णार्थेति ार्ष्णाजिनिः ॥९॥

अथापि स्यात् । या श्रुतिरनुशयसद्भावप्रतिपादनायोदाहृता— 'तद्य इह रमणीयचरणाः' इति, सा खलु चरणाद्योन्यापत्तिं दर्शयति, नानुशयात्। अन्यच्चरणमन्योऽनुशयः। चरणं चारित्रमाचारः शीलमित्यनर्थान्तरम् । अनुशयस्तु भुक्तफलात्कर्मणोऽतिरिक्तं कर्माभिप्रेतम् । श्रुतिश्च कर्मचरणे भेदेन व्यपदिशति— 'यथाकारी यथाचारी तथा भवति' इति, 'यान्यनवद्यानि कर्माणि तानि सेवितव्यानि नो इतराणि, यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि' इति च । तस्माच्चरणाद्योन्यापत्तिश्रुतेः नानुशयसिद्धिरिति चे । नैष दोषः । यतोऽनुशयोपलक्षणार्थैव एषा चरणश्रुतिरिति कार्ष्णाजिनिराचार्यो मन्यते ॥९॥

आनर्थक्यमिति चे तदपेक्षत्वा ॥१०॥

स्यादेतत् । कस्मात्पुनश्चरणशब्देन श्रौतं शीलं विहाय लाक्षणिकोऽनुशयः प्रत्याय्यते । ननु शीलस्यैव श्रौतस्य विहितप्रतिषिद्धस्य साध्वसाधुरूपस्य शुभाशुभयोन्यापत्तिः फलं भविष्यति । अवश्यं च शीलस्यापि किंचित्फलमभ्युपगंतव्यम् । अन्यथा ह्यानर्थक्यमेव शीलस्य प्रसज्येतेति चेत् । नैष दोषः । कुतः ? तदपेक्षत्वात् । इष्टादि हि कर्मजातं चरणापेक्षम् । नहि सदाचारहीनः कश्चिदधिकृतः स्यात्— 'आचारहीनं न पुनन्ति वेदाः' इत्यादिस्मृतिभ्यः । पुरुषार्थत्वेऽप्याचारस्य नानर्थक्यम् । इ ादौ हि कर्म ाते फलमारभमाणे तदपेक्ष एवाचारस्तत्रैव कंचिदतिशयमारप्स्यते । कर्म च सर्वार्थकारीति श्रुतिस्मृतिप्रसिद्धिः । तस्मात्कर्मैव शीलोपलक्षितमनुशयभूतं योन्यापत्तौ कारणमिति कार्ष्णाजिनेर्मतम् । नहि कर्माणि भवति शीलाद्योन्यापत्तिर्युक्ता । नहि पद्भ्यां पलायितुं पारयमाणो जानुभ्यां रंहितुं अर्हतीति ॥१०॥

सुकृतदुष्कृते एवेति तु बादरिः ॥१ ॥

बादरिस्त्वाचार्यः कृतदुष्कृते एव चरणशब्देन प्रत्याय्येते इति मन्यते । चरणमनु ानं कर्मेत्यनर्थान्तरम् । तथाहि अविशेषेण कर्ममात्रे चरतिः प्रयुज्यमानो दृश्यते । यो हि इष्टादिलक्षणं पुण्यं कर्म करोति, तं ौकिका आच ते, धर्मं चरत्येष महात्मेति । आचारोऽपि च र्मविशेष

एव । भेदव्यपदेशस्तु कर्मचरणयोः ब्राह्मणपरिव्राजकन्यायेनाप्युपपद्यते । तस्माद्रमणीयचरणाः प्रशस्तकर्माणः, कपूयचरणा निंदितकर्माणः इति निर्णयः ॥११॥

## ३ अनिष्टादिकार्यधिकरणम् । सू० १२–२ ।

### अनिष्टादिकारिणामपि च श्रुतम् ॥ २॥

इष्टादिकारिणश्चंद्रमसं गच्छन्तीत्युक्तम् । ये त्वितरेऽनिष्टादिकारिणः तेऽपि किं चंद्रमसं गच्छन्त्युत न गच्छन्तीति चिंत्यते । तत्र तावदाहुः इष्टादिकारिण एव चंद्रमसं गच्छन्तीत्येतन्न । कस्मात् ? यतोऽनिष्टादिकारिणामपि चंद्रमंडलं गंतव्यत्वेन श्रुतम् । तथाह्यविशेषेण कौषीतकिनः समामनन्ति— "ये वै के चास्माल्लोकात्प्रयन्ति चंद्रमसमेव ते सर्वे गच्छन्ति" इति । देहारंभोऽपि च पुनर्जायमानानां नान्तरेण चंद्रप्राप्तिमवकल्पते । 'पंचम्यामाहुतौ' इत्याहुतिसंख्यानियमात् । यस्मात्सर्व एव चंद्रमसमासीदेयुः । इष्टादिकारिणामितरेषां च समानगतित्वं न युक्तमिति चेत् । न । इतरेषां चंद्रमंडले भोगाभावात् ॥१२॥

### संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥१३॥

तु-शब्दः पक्षं व्यावर्तयति । नैतदस्ति सर्वे चंद्रमसं गच्छन्तीति । कस्मात् ? यतो भोगायैव चंद्रारोहणं न निष्प्रयोजनम् । नापि प्रत्यवरोहायैव । यथा कश्चिद्वृक्षमारोहति पुष्पफलोपादानायैव, न निष्प्रयोजनं, नापि पतनायैव । भोगश्चानिष्टादिकारिणां चंद्रमसि नास्तीत्युक्तम् । तस्मादिष्टादिकारिण एव चंद्रमसमारोहन्ति, नेतरे । ते तु संयमनं यमालयमवगाह्य स्वदुष्कृतानुरूपा यामीर्यातना अनुभूय पुनरेवेमं लोकं प्रत्यवरोहन्ति । एवंभूतौ तेषामारोहावरोहौ भवतः । कुतः ? तद्गतिदर्शनात् । तथाहि यमवचनसरूपा श्रुतिः प्रयतामनिष्टादिकारिणां यमवश्यतां दर्शयति— 'न सांपरायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम् । अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे ॥' इति । "वैवस्वतं संगमनं जनानाम्" इत्येवंजातीयकं च बह्वेव यमवश्यताप्राप्तिलिंगं भवति ॥१३॥

### स्मरन्ति च ॥१४॥

अपिच मनुव्यासप्रभृतयः शिष्टाः यमने पुरे यमायत्तं कपूयकर्मवि-

पाकं स्मरन्ति नाचिकेतोपाख्यानादिषु ॥१४॥

अपिच स ॥१५॥

अपिच सप्त नरका रौरवप्रमुखा दुष्कृतफलोपभोगभूमित्वेन स्मर्यन्ते पौराणिकैः ।ताननिष्टादिकारिणः प्राप्नुवन्ति । कुतस्ते चंद्रं प्राप्नुयुरित्यभिप्रायः ॥१५॥

ननु विरुद्धमिदं यमायत्ता यातनाः पापकर्माणोऽनुभवन्तीति । यावता तेषु रौरवादिष्वन्ये चित्रगुप्तादयो नानाधिष्ठातारः स्मर्यन्त इति । नेत्याह—

तत्रापि च तद्व्यापारादविरोधः ॥१६॥

तेष्वपि सप्तसु नरकेषु तस्यैव यमस्याधिष्ठातृत्वव्यापाराभ्युपगमादविरोधः । यमप्रयुक्ता एव हि ते चित्रगुप्तादयोऽधिष्ठातारः स्मर्यन्ते ॥१६॥

विद्याकर्मणोरिति तु प्रकृतत्वात् ॥१७॥

पंचाग्निविद्यायाम् 'वेत्थ यथासौ लोको न संपूर्यते' इत्यस्य प्रश्नस्य प्रतिवचनावसरे श्रूयते— 'अथैतयोः पथोर्न कतरेणचन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति । जायस्व म्रियस्वेत्येतत्तृतीयं स्थानं तेनासौ लोको न संपूर्यते' इति । तत्रैतयोः पथोरिति विद्याकर्मणोरित्येतत् । कस्मात्? प्रकृतत्वात् । विद्याकर्मणी हि देवयानपितृयाणयोः पथोः प्रतिपत्तौ प्रकृते । 'तद्य इत्थं विदुः' इति विद्या, तया प्रतिपत्तव्यो देवयानः पंथाः प्रकीर्तितः । 'इष्टापूर्ते दत्तम्' इति कर्म । तेन प्रतिपत्तव्यः पितृयाणः पंथाः प्रकीर्तितः । तत्प्रक्रियायाम् 'अथैतयोः पथोर्न कतरेणचन' इति श्रुतम् । एतदुक्तं भवति— ये न विद्यासाधनेन देवयाने पथ्यधिकृताः, नापि कर्मणा पितृयाणे, तेषामेष क्षुद्रजंतुलक्षणोऽसकृदावर्ती तृतीयः पंथा भवतीति । तस्मादपि नानिष्टादिकारिभिश्चंद्रमाः प्राप्यते । स्यादेतत् । तेऽपि चंद्रबिंबमारुह्य ततोऽवरुह्य क्षुद्रजंतुत्वं प्रतिपत्स्यन्त इति । तदपि नास्ति । आरोहानर्थक्यात् । अपिच सर्वेषु प्रयत्सु चंद्रलोकं प्राप्नुवत्सु असौ लोकः प्रयद्भिः संपूर्येत, इत्यतः प्रश्नविरुद्धं प्रतिवचनं प्रसज्येत । तथाहि प्रतिवचनं दातव्यं यथासौ लोको न संपूर्यते । अवरोहाभ्युपगमात् असंपूर्णोपपत्तिरिति चेत् । न । अश्रुतत्वात् । सत्यं अवरोहादप्यसंपूरणमुपपद्यते । श्रुतिस्तु तृतीयस्था-

नसंकीर्तनेन असंपूरणं दर्शयति— 'एतत्तृतीयं स्थानं तेनासौ लोको न संपूर्यते' इति। तेन अनारोहादेवासंपूरणमिति युक्तम्। अवरोहस्येष्टादिकारिष्वपि अविशिष्टत्वे सति तृतीयस्थानोक्त्यानर्थक्यप्रसंगात्। तुशब्दस्तु शाखान्तरीयवाक्यप्रभवां अशेषगमनाशंकामुच्छिनत्ति। एवं सति अधिकृतापेक्षः शाखान्तरीये वाक्ये सर्वशब्दोऽवतिष्ठते। ये वै केचिदधिकृता अस्माल्लोकात्प्रयान्ति चंद्रमसमेव ते सर्वे गच्छन्तीति ॥१७॥

यत्पुनरुक्तं देहलाभोपपत्तये सर्वे चंद्रमसं गंतुमर्हन्ति, 'पंचम्यामाहुतौ' इत्याहुतिसंख्यानियमादिति। तत्प्रत्युच्यते—

**न तृतीये तथोपलब्धेः ॥१८॥**

न तृतीये स्थाने देहलाभाय पंचसंख्यानियम आहुतीनामादर्तव्यः। कुतः? तथोपलब्धेः। तथाहि अंतरेणैवाहुतिसंख्यानियमं वर्णितेन प्रकारेण तृतीयस्थानप्राप्तिरुपलभ्यते 'जायस्व म्रियस्वेत्येतत्तृतीयं स्थानम्' इति। अपिच 'पंचम्यामाहुतावापः पुरुषवचसो भवन्ति' इति मनुष्यशरीरहेतुत्वेन आहुतिसंख्या संकीर्त्यते, न कीटपतंगादिशरीरहेतुत्वेन, पुरुषशब्दस्य मनुष्यजातिवचनत्वात्। अपिच पंचम्यामाहुतावपां पुरुषवचस्त्वमुपदिश्यते, नापंचम्यामाहुतौ पुरुषवचस्त्वं प्रतिषिध्यते, वाक्यस्य द्व्यर्थतादोषात्। तत्र येषामारोहावरोहौ संभवतः तेषां पंचम्यामाहुतौ देह उद्भविष्यति। अन्येषां विनैवाहुतिसंख्यया भूतान्तरोपसृष्टाभिरद्भिर्देह आरप्स्यते ॥१८॥

**स्मर्यतेऽपि च लोके ॥१९॥**

अपिच स्मर्यते लोके। द्रोणधृष्टद्युम्नप्रभृतीनां सीताद्रौपदीप्रभृतीनां च अयोनिजत्वम्। तत्र द्रोणादीनां योषिद्विषया एकाहुतिर्नास्ति। धृष्टद्युम्नादीनां तु योषित्पुरुषविषये द्वे अप्याहुती न स्तः। यथा च तत्राहुतिसंख्यानियमानादरो भवति, एवमन्यत्रापि भविष्यति। बलाकाप्यंतरेणैव रेतःसेकं गर्भं धत्त इति लोकरूढिः ॥१९॥

**दर्शनाच्च ॥२०॥**

अपिच चतुर्विधे भूतग्रामे जरायुजांडजस्वेदजोद्भिज्जलक्षणे स्वेदजोद्भिज्जयोः अंतरेणैव ग्राम्यधर्मं उत्पत्तिदर्शनादाहुतिसंख्यानादरो भवति। एवमन्यत्रापि भविष्यति ॥२०॥

ननु 'तेषां त्वेषां भूतानां त्रीण्येव बीजानि भवन्ति आंडजं जीवजमुद्भिज्जम्' इति अत्र त्रिविध एव भूतग्रामः श्रूयते । कथं चतुर्विधत्वं भूतग्रामस्य प्रतिज्ञातमिति । अत्रोच्यते—

तृतीयशब्दावरोधः संशोकजस्य ॥२१॥

'आंडजं जीव मुद्भिज्जम्' इत्यत्र तृतीयेनोद्भिज्जशब्देनैव स्वेदजोपसंग्रहः कृतः प्रत्येतव्यः । उभयोरपि स्वेदजोद्भिज्जयोः भूम्युदकोद्भेदप्रभवत्वस्य तुल्यत्वात् । स्थावरोद्भेदात्तु विलक्षणो जंगमोद्भेद इत्यन्यत्र स्वेदजोद्भिज्जयोः भेदवाद इत्याविरोधः ॥२१॥

## ४ साभाव्यापत्त्यधिकरणम् । सू० २२ ।

साभाव्यापत्तिरुपपत्तेः ॥२२॥

इष्टादिकारिणः चंद्रमसमारुह्य तस्मिन्यावत्संपातमुषित्वा ततः सानुशया अवरोहन्तीत्युक्तम् । अथावरोहप्रकारः परीक्ष्यते । तत्रेयमवरोहश्रुतिः भवति— 'अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति' इति । तत्र संशयः— किमाकाशादिस्वरूपमेव अवरोहन्तः प्रतिपद्यन्ते, किंवाकाशादिसाम्यमिति? तत्र प्राप्तं तावत् आकाशादिस्वरूपमेव प्रतिपद्यन्त इति । कुतः? एवं हि श्रुतिर्भवति । इतरथा लक्षणा स्यात् । श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या, न लक्षणा । तथाच 'वायुर्भूत्वा धूमो भवति' इत्येवमादीन्यक्षराणि तत्तत्स्वरूपोपपत्तौ आंजस्येन अवकल्पन्ते । तस्मादाकाशादिस्वरूपप्रतिपत्तिरिति । एवं प्राप्ते ब्रूमः— आकाशादिसाम्यं प्रतिपद्यन्त इति । चंद्रमंडले यदम्मयं शरीरमुपभोगार्थमारब्धं, तदुपभोगक्षये सति प्रविलीयमानं सूक्ष्ममाकाशसमं भवति । ततो वायोर्वशमेति । ततो धूमादिभिः संपृच्यत इति । तदेतदुच्यते— 'यथेतमाकाशमाकाशाद्वायुम्' इत्येवमादिना । कुत एतत्? उपपत्तेः । एवं ह्येतदुपपद्यते । नहि अन्यस्यान्यभावो मुख्य उपपद्यते । आकाशस्वरूपप्रतिपत्तौ च वाय्वादिक्रमेणावरोहो नोपपद्यते । विभुत्वाच्चाकाशेन नित्यसंबंधवत्त्वान्न तत्सादृश्यापत्तेः अन्यः तत्संबंधो घटते । श्रुत्यसंभवे च लक्षणाश्रयणं न्याय्यमेव । अत आकाशादितुल्यतापत्तिरेवात्र आकाशादिभाव इत्युपचर्यते ॥२२॥

५ नातीचिराधिकरणम् । सू० २३ ।

नातिचिरेण विशेषात् ॥२३॥

तत्र आकाशादिप्रतिपत्तौ प्राग्व्रीह्यादिप्रतिपत्तेर्भवति विशयः । किं दीर्घं दीर्घं कालं पूर्वपूर्वसादृश्येनावस्थाय उत्तरोत्तरसादृश्यं गच्छन्त्युताल्पमल्पमिति । तत्रानियमो नियमकारिणः शास्त्रस्याभावादिति । एवं प्राप्ते इदमाह— नातिचिरेणेति । अल्पमल्पं कालं आकाशादिभावेनावस्थाय वर्षधाराभिः सहेमां भुवमापतन्ति । कुत एतत्? विशेषदर्शनात् । तथाहि व्रीह्यादिभावापत्तेरनंतरं विशिनष्टि— 'अतो वै खलु दुर्निष्प्रपतरम्' इति । तकार एकश्छांदस्यां प्रक्रियायां लुप्तो मंतव्यः । दुर्निष्प्रपततरं दुर्निष्क्रमतरं दुःखतरमस्माद्व्रीह्यादिभावान्निःसरणं भवतीत्यर्थः । तदत्र दुःखं निष्प्रपतनं प्रदर्शयन्पूर्वेषु सुखं निष्प्रपतनं दर्शयति । सुखदुःखताविशेषश्चायं विष्प्रपतनस्य कालाल्पत्वदीर्घत्वनिमित्तः । तस्मिन्नवधौ शरीरानिष्पत्तेः उपभोगासंभवात् । तस्माद्व्रीह्यादिभावापत्तेः प्रागल्पेनैव कालेनावरोहः स्यादिति॥२३॥

६ अन्याधिष्ठिताधिकरणम् । सू० २४–२७ ।

अन्याधिष्ठितेषु पूर्ववदभिलापात् ॥२४॥

तस्मिन्नेवावरोहे प्रवर्षणानंतरं पठ्यते— 'त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते' इति । तत्र संशयः— किमस्मिन्नवधौ स्थावरजात्यापन्नाः स्थावरसुखदुःखभाजो अनुशयिनो भवन्ति, आहोस्वित्क्षेत्रज्ञान्तराधिष्ठितेषु स्थावरशरीरेषु संश्लेषमात्रं गच्छन्तीति । किं तावत्प्राप्तम्? स्थावरजात्यापन्नाः तत्सुखदुःखभाजोऽनुशयिनो भवन्तीति । कुत एतत्? जनेर्मुख्यार्थत्वोपपत्तेः स्थावरभावस्य च श्रुतिस्मृत्योः उपभोगस्थानत्वप्रसिद्धेः । पशुहिंसादियोगाच्च इष्टादेः कर्मजातस्यानिष्टफलत्वोपपत्तेः । तस्मान्मुख्यमेवेदमनुशयिनां व्रीह्यादिजन्म । श्वादिजन्मवत् । यथा 'श्वयोनिं वा सूकरयोनिं वा चंडालयोनिं वा' इति मुख्यमेवानुशयिनां श्वादिजन्म तत्सुखदुःखान्वितं भवति, एवं व्रीह्यादिजन्मापीति । एवं प्राप्ते ब्रूमः— अन्यैर्जीवैराधिष्ठितेषु व्रीह्यादिषु संसर्गमात्रमनुशयिनः प्रतिपद्यन्ते, न तत्सुखदुःखभाजो भवन्ति । पूर्ववत् । यथा वायुधूमादिभावो अनुशयिनां तत्संश्लेषमात्रम् । एवं व्रीह्यादिभावोऽपि जातिस्थावरैः संश्लेषमात्रम् । कुत एतत्?

तद्वदेवेहाप्यभिलापात् । कोऽभिलापस्य द्भावः? कर्मव्यापारमंतरेण संकीर्तनम् । यथाकाशादिषु प्रवर्षणान्तेषु न कंचित्कर्मव्यापारं परामृशत्येवं व्रीह्यादिजन्मन्यपि । तस्मान्नास्त्यत्र सुखदुःखभाक्त्वमनुशयिनाम् । यत्र तु सुखदुःखभाक्त्वमभिप्रैति, परामृशति तत्र कर्मव्यापारं 'रमणीयचरणाः...कपूयचरणाः' इति । अपिच मुख्येऽनुशयिनां व्रीह्यादिजन्मनि, व्रीह्यादिषु लूयमानेषु कंड्यमानेषु पच्यमानेषु भक्ष्यमाणेषु च तदभिमानिनोऽनुशयिनः प्रवसेयुः । यो हि जीवो यच्छरीरमभिमन्यते स तस्मिन्पीड्यमाने प्रवसतीति प्रसिद्धम् । तत्र व्रीह्यादिभावाद्रेतःसिग्भावोऽनुशयिनां नाभिलप्येत । अतः संसर्गमात्रमनुशयिनां अन्याधिष्ठितेषु व्रीह्यादिषु भवति । एतेन जनेर्मुख्यार्थत्वं प्रतिब्रूयादुपभोगस्थानत्वं च स्थावरभावस्य । नच वयमुपभोगस्थानत्वं स्थावरभावस्यावजानीमहे । भवत्वन्येषां जंतूनां अपुण्यसामर्थ्येन स्थावरभावमुपगतानामेतदुपभोगस्थानम् । चंद्रमसस्तु अवरोहन्तोऽनुशयिनो न स्थावरभावमुपभुंजत इत्याचक्ष्महे ॥२४॥

अशुद्धमिति चेन्न शब्दात् ॥२५॥

यत्पुनरुक्तं पशुहिंसादियोगादशुद्धमाध्वरिकं कर्म तस्यानिष्टमपि फलं अवकल्पत इत्यतो मुख्यमेवानुशयिनां व्रीह्यादिजन्मास्तु, तत्र गौणी कल्पना अनर्थिकेति । तत्परिह्रियते । न । शास्त्रहेतुत्वाद्धर्माधर्मविज्ञानस्य । अयं धर्मो अयमधर्म इति शास्त्रमेव विज्ञाने कारणम् । अतींद्रियत्वात्तयोः । अनियतदेशकालनिमित्तत्वाच्च । यस्मिन्देशे काले निमित्ते च यो धर्मोऽनुष्ठीयते, स एव देशकालनिमित्तान्तरेष्वधर्मो भवति । तेन शास्त्रादृते धर्माधर्मविषयं विज्ञानं न कस्यचिदस्ति । शास्त्राच्च हिंसानुग्रहाद्यात्मको ज्योतिष्टोमो धर्म इत्यवधारितः, कथमशुद्ध इति शक्यते वक्तुम् । ननु 'न हिंस्यात्सर्वा भूतानि' इति शास्त्रमेव भूतविषयां हिंसामधर्म इत्यवगमयति । बाढम् । उत्सर्गस्तु सः । अपवादः 'अग्नीषोमीयं पशुमालभेत' इति । उत्सर्गापवादयोश्च व्यवस्थितविषयत्वम् । तस्माद्विशुद्धं कर्म वैदिकं, शिष्टैरनुष्ठीयमानत्वादनिंद्यमानत्वाच्च । तेन न तस्य प्रतिरूपं फलं जातिस्थावरत्वम् । नच श्वादिजन्मवदपि व्रीह्यादिजन्म भवितुमर्हति । तद्धि कपूयचरणानधिकृत्य उच्यते । नैवमिह वैशेषिकः कश्चिदधिकारोऽस्ति । अतश्चंद्रमंडलस्खलितानां

अनुशयिनां व्री ादि श्लेषमात्रं तद्भाव इत्युपचर्यते ॥२५॥

रेतःसिग्योगोऽथ ॥२६॥

इतश्च व्रीह्यादि श्लेषमात्रं तद्भावो, यत्कारणं व्रीह्यादिभावस्यानंतरं अनुशयिनां रेतःसिग्भाव आम्नायते— 'यो यो ह्यन्नमत्ति यो रेतः सिंचति तद्भूय एव भवति' इति। नचात्र मुख्यो रेतःसिग्भावः भवति। चिरजातो हि प्राप्तयौवनो रेतःसिग्भवति। कथमिव अनुपचरितं तद्भावमद्यमानान्नानुगतोऽनुशयी प्रतिपद्यते? तत्र तावदवश्यं रेतःसिग्योग एव रेतःसिग्भावोऽभ्युपगंतव्यः। तद्वद्व्रीह्यादिभावोऽपि व्रीह्यादियोग एवेत्यविरोधः।२६

योनेः शरीरम् ॥२ ॥

अथ रेतःसिग्भावस्यानंतरं योनौ निषिक्ते रेतसि योनेराधि शरीरमनुशयिनां अनुशयफलोपभोगाय जायत इत्याह शास्त्रम्— 'तद्य इह रमणीयचरणाः' इत्यादि। तस्मादप्यवगम्यते नावरोहे व्रीह्यादिभावावसरे तच्छरीरमेव सुखदुःखान्वितं भवतीति। तस्माद्व्रीह्यादिसंश्लेषमात्रं अनुशयिनां तज्जन्मेति सिद्धम् ॥२७॥

इति शारीरकमीमांसाभाष्ये तृतीयाध्यायस्य प्रथम पादः ॥

## तृतीयाध्याये द्वितीय पादः।



### १ संध्याधिकरणम्। सू० १–६।

संध्ये सृष्टिराह हि ॥१॥

अतिक्रान्ते पादे पंचाग्निविद्यामुदाहृत्य जीवस्य संसारगतिप्रभेदः प्रपंचितः। इदानीं तु तस्यैवावस्थाभेदः प्रपंच्यते। इदमामनन्ति— 'स यत्र प्रस्वपिति' इत्युपक्रम्य 'न तत्र रथा न रथयोगा न पंथानो भवन्त्यथ रथान्रथयोगान्पथः सृजते' इत्यादि। तत्र संशयः— किं प्रबोध इव स्वप्नेऽपि पारमार्थिकी सृष्टिः, आहोस्विन्मायामयीति। तत्र तावत्प्रतिपद्यते— संध्ये तथ्यरूपा सृष्टिरिति। संध्यमिति स्वप्नस्थानमाचष्टे, वेदे प्रयोगदर्शनात् 'संध्यं तृतीयं स्वप्नस्थानम्' इति। द्वयोर्लोकस्थानयोः प्रबोधसंप्रसादस्थानयोर्वा संधौ भवतीति ध्यम्। तस्मिन्संध्ये स्थाने तथ्यरूपैव सृष्टिर्भवितुमर्हति।

८ ।धिकरणम् । सू० ३८–४ ।

फलमत उपपत्तेः ॥३८॥

तस्यैव ो व्यावहारिक्यां ईशित्रीशितव्यविभागावस्थायां अयमन्यः स्वभावो वर्ण्यते । यदेतदिष्टानिष्टव्यामिश्र क्षणं कर्मफलं संसारगोचरं त्रिविधं प्रसिद्धं जंतूनां किमेतत्कर्मणो भवत्याहोस्विदीश्वरादिति भवति विचारणा । तत्र तावत्प्रतिपाद्यते फलमत ईश्वराद्भवितुमर्हति । कुतः? उपपत्तेः । स हि सर्वाध्यक्षः सृष्टिस्थितिसंहारान्विचित्रान्विदधत् देशकालविशेषाभिज्ञत्वात्कर्मिणां कर्मानुरूपं फलं ंपादयतीत्युपपद्यते । कर्मणस्त्वनुक्षणविनाशिनः कालान्तरभावि फ ं भवतीत्यनुपपन्नम् । अभावाद्भावानुत्पत्तेः । स्यादेतत् कर्म विनश्यत्स्वकालमेव स्वानुरूपं फलं जनयित्वा विनश्यति, तत्फलं कालान्तरितं कर्त्रा भोक्ष्यत इति । तदपि न परिशुध्यति प्राग्भोक्तृसंबंधात्फलत्वानुपपत्तेः । यत्कालं हि यत्सुखं दुःखं वा आत्मना भुज्यते तस्यैव लोके फलत्वं प्र ि द्धम् । नह्य बद्धस्यात्मना सुखस्य दुःखस्य वा फलत्वं प्रतियन्ति लौकिकाः । अथोच्येत मा भूत्कर्मानंतरं फलोत्पादः, कर्मकार्यादपूर्वात्फलमुत्पत्स्यत इति । तदपि नोपपद्यते । अपूर्वस्याचेतनस्य काष्ठलोष्टसमस्य चेतनेनाप्रवर्तितस्य प्रवृत्त्यनुपपत्तेः । तदस्तित्वे च प्रमाणाभावात् । अर्थापत्तिः प्रमाणमिति चेत् । न। ईश्वरसिद्धेरर्थापत्तिक्षयात्॥३८

श्रुतत्वाच्च ॥३९॥

न केवलमुपपत्तेरेवेश्वरं फलहेतुं कल्पयामः, किं तर्हि श्रुतत्वादपि ईश्वरमेव फलहेतुं मन्यामहे । तथाच श्रुतिर्भवति— ' वा एष महानज आत्मान्नादो वसुदानः' इत्येवंजातीयका ॥३९॥

धर्मं जैमिनिरत एव ॥४०॥

जैमिनिस्त्वाचार्यो धर्मं फलस्य दातारं मन्यते । अत एव हेतोः श्रुतेरुपपत्तेश्च । श्रूयते तावदयमर्थः 'स्वर्गकामो यजेत' इत्येवमादिषु वाक्येषु तत्र च विधिश्रुतेर्विषयभावोपगमाद्यागः स्वर्गस्योत्पादक इ गम्यते । अन्यथा ह्यननुष्ठातृको याग आपद्येत । तत्रास्य उपदेशवैयर्थ्यं स्यात् । ननु अनुक्षणविनाशिनः ंणः फलं नोपपद्यत इति, परित्यक्तोऽयं पक्षः । नैष दोषः । श्रुतिप्रामाण्यात् । श्रुतिश्चेत्प्रमाणं, यथायं कर्मफलसंबंधः श्रुत उप-

पद्यते, तथा कल्पयितव्यः । नचानुत्पाद्य किमप्यपूर्वं कर्म विनश्यत्कालान्तरितं फलं दातुं शक्नोति । अतः कर्मणो वा सूक्ष्मा काचिदुत्तरावस्था फलस्य वा पूर्वावस्थापूर्वं नामास्तीति तर्क्यते । उपपद्यते चायमर्थ उक्तेन प्रकारेण । ईश्वरस्तु फलं ददातीत्यनुपपन्नम् । अविचि स्य कारणस्य विचित्रकार्यानुपपत्तेः वैषम्यनैर्घृण्यप्रसंगात् अनुष्ठानवैयर्थ्यापत्तेश्च । तस्माद्धर्मादेव फलमिति ॥४०॥

पूर्वं तु बादरायणो हे् व्यपदेशात् ॥४१॥

बादरायणस्त्वाचार्यः पूर्वोक्तमेवेश्वरं फलहेतुं मन्यते । केवलात्कर्मणोऽपूर्वाद्वा केवलात्फलमित्ययं पक्षः तुशब्देन व्यावर्त्यते । कर्मापेक्षादपूर्वापेक्षाद्वा यथा, तथास्त्वीश्वरात्फलमिति सिद्धान्तः । कुतः? हेतुव्यपदेशात् । धर्माधर्मयोरपि हि कारयितृत्वेनेश्वरो हेतुर्व्यपदिश्यते, फलस्य च दातृत्वेन 'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते । एष उ एवासाधु कर्म कारयति तं यमधो निनीषते' इति । स्मर्यते चायमर्थो भगवद्गीतासु "यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति । तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ स तया श्रद्धया युक्तस्तस्याराधनमीहते । लभते च ततः कामान्मयैव विहितान्हितान्" इति । सर्ववेदान्तेषु चेश्वरहेतुका एव सृष्टयो व्यपदिश्यन्ते । तदेव चेश्वरस्य फलहेतुत्वं यत्स्वकर्मानुरूपाः प्रजाः सृजतीति । विचित्रकार्यानुपपत्त्यादयोऽपि दोषाः कृतप्रयत्नापेक्षत्वादीश्वरस्य न प्रसज्यन्ते ॥४१॥

इति श्रीगोविंदभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ शारीरकमीमांसाभाष्ये तृतीयाध्यायस्य द्वितीयः पादः ॥

## तृतीयाध्याये तृतीयः पादः ।



व्याख्यातं विज्ञेयस्य ब्रह्मणस्तत्त्वम् । इदानीं तु प्रतिवेदान्तं विज्ञानानि भिद्यन्ते न वेति विचार्यते । ननु विज्ञेयं ब्रह्म पूर्वापरादिभेदरहितं एकरसं सैन्धवघनवदवधारितं, तत्र कुतो विज्ञानभेदाभेदचिंतावसरः? नहि

कर्म हुत्ववद्ब बहुत्वमपि वेदान्तेषु प्रतिपिपादयिषितमिति शक्यं वक्तुम् । ब्रह्मण एकत्वादेकरूपत्वाच्च । नचैकरूपे ब्रह्मण्यनेकरूपाणि विज्ञानानि संभवन्ति । नहि अन्यथार्थोऽन्यथा ज्ञानं, इत्यभ्रान्तं भवति । यदि पुरे-कस्मिन्ब्रह्मणि बहूनि विज्ञानानि वेदान्तान्तरेषु प्रतिपिपादयिषितानि, तेषा-मेकमभ्रान्तं भ्रान्तानीतराणीत्यनाश्वासप्रसंगो वेदान्तेषु । तस्मान्न तावत्प्रति-वेदान्तं ब्रह्मविज्ञानभेद आशंकितुं शक्यते । नाप्यस्य चोदनाद्यविशेषादभेद उच्येत । ब्रह्मविज्ञानस्याचोदनालक्षणत्वात् । अविधिप्रधानैर्हि वस्तुपर्यवसा-यिभिर्ब्रह्मवाक्यैः ब्रह्मविज्ञानं जन्यते इत्यवोचदाचार्यः 'तत्तु समन्वयात्' [१.१.४] इत्यत्र । तत्कथमिमां भेदाभेदचिंतामारभत इति ॥

तदुच्यते— सगुणब्रह्मविषया प्राणादिविषया चेयं विज्ञानभेदाभेद-चिंतेत्यदोषः । अत्र हि कर्मवदुपासनानां भेदाभेदौ संभवतः, कर्मवदेव चोपासनानि दृष्टफलान्यदृष्टफलानि चोच्यन्ते । क्रममुक्तिफलानि च कानि-चित्सम्यग्ज्ञानोत्पत्तिद्वारेण । तेष्वेषा चिंता संभवति— किं प्रतिवेदान्तं विज्ञानभेदः आहोस्विन्नेति ॥

तत्र पूर्वपक्षहेतवस्तावदुपन्यस्यन्ते । नाम्नस्तावद्भेदप्रतिपत्तिहेतुत्वं प्रसिद्धं ज्योतिरादिषु । अस्ति चात्र वेदान्तान्तरविहितेषु विज्ञानेष्वन्यदन्य-न्नाम, तैत्तिरीयकं वाजसनेयकं कौथुमकं कौषीतकं शाट्यायनकमित्येवमादि । तथा रूपभेदोऽपि कर्मभेदस्य प्रतिपादकः प्रसिद्धो "वैश्वदेव्यामिक्षा वाजि-भ्यो वाजिनं" इत्येवमादिषु । अस्ति चात्र रूपभेदः । तद्यथा— केचि-च्छाखिनः पंचाग्निविद्यायां षष्ठमपरमग्निमामनन्त्यपरे पुनः पंचैव पठन्ति । तथा प्राणसंवादादिषु केचिदूनान् वागादीनामनन्ति, केचिदधिकान् । तथा धर्मविशेषोऽपि कर्मभेदस्य प्रतिपादक आशंकितः कारीर्यादिषु । अस्ति चात्र धर्मविशेषः । यथाथर्वणिकानां शिरोव्रतमिति । एवं पुनरुक्त्यादयोऽपि भेदहेतवो यथासंभवं वेदान्तान्तरेषु योजयितव्याः । तस्मात्प्रतिवेदान्तं विज्ञानभेद इति । एवं प्राप्ते ब्रूमः—

### १ सर्ववेदान्तप्रत्ययाधिकरणम् । सू० १–४ ।

#### सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥१॥

र्ववेदान्तप्रत्ययानि विज्ञानानि तस्मिंस्तस्मिन्वेदान्ते तानि तान्येव

भवितुमर्हन्ति । कुतः? चोदनाद्यविशेषात् । आदिग्रहणेन
णसिद्धान्तसूत्रोदिता अभेदहेतव इहाकृष्यन्ते । संयोगरूप
दित्यर्थः । यथैकस्मिन्नग्निहोत्रे शाखाभेदेऽपि पुरुषप्रयत्न
जुहुयादिति, एवं 'यो ह वै ज्ये च श्रेष्ठं च वेद' इ
छंदोगानां च तादृश्येव चोदना । प्रयोजन योगोऽप्यवि
श्रेष्ठश्च स्वानां भ ति' इति । रूपमप्युभयत्र तदेव विज्ञान
श्रेष्ठादिगुणविशेषणान्वितं प्राणतत्त्वम् । यथा च द्रव्यदे
एवं विज्ञेयं रूपं विज्ञानस्य । तेन हि तद्रूप्यते । समाख्
विद्येति । स्मात्सर्ववेदान्तप्रत्ययत्वं विज्ञानानाम् । एवं पं
नरविद्या शांडिल्यविद्येत्येवमादिष्वपि योजयितव्यम् । ये
भेदहेत्वाभा ाः ते प्रथ एव कांडे 'न नाम्ना स्यादच
इत्यारभ्य परिहृताः ॥१॥

इहापि कंचिद्विशेषमाशंक्य परिहरति—

**भेदान्नेति चेन्नैकस्यामपि ॥२॥**

स्यादेतत् । र्ववेदान्तप्रत्ययत्वं विज्ञानानां गु
तथाहि वाजसनेयिनः पंचाग्निविद्यां प्रस्तुत्य षष्ठमपरमग्निमाम
'ग्निरेवाग्निर्भवति' इत्यादिना । छंदोगास्तु तं नामनन्ति पं
उपसंहरन्ति 'अथ ह य एतानेवं पंचाग्नीन्वेद' इति । येषां
येषां च नास्ति, कथमुभयेषामेका विद्या उपपद्येत? न
शक्यते प्रत्येतुं, पंच ख्याविरो ात् । तथा प्राण वादे
प्राणान्वाक्चक्षुःश्रोत्रमनांसि छंदोगा आमनन्ति । वाजस
प्यामनन्ति 'रेतो वै प्रजापतिः प्रजायते ह प्रजया पशुभिर्य
आवापोद्वापभेदाच्च वेद्यभेदो भवति, वेद्यभेदाच्च विद्याभे
भेदादिव यागस्येति चेत् । नैष दोषः । यत एकस्यामपि
जातीयको गुणभेद उपपद्यते । यद्यपि षष्ठस्याग्नेरुपसंहा
थापि द्युप्रभृतीनां पंचानामग्नीनामुभयत्र प्रत्यभिज्ञाय न
भवितुमर्हति । नहि षोडशिग्रहणाग्रहणयोरतिरात्रो भिद्यते ।
षष्ठोऽग्निश्छंदोगैः— '' प्रेतं दिष्टमितोऽग्नय एवं हरन्ति' इ

नैयिनस्तु सांपादिकेषु पंचस्वग्निष्वनुवृत्तायाः मिद्धूमादिकल्पनाया निवृत्तये 'तस्याग्निरेवाग्निर्भवति मित्समित्' इत्यादि मामनन्ति । नित्यानुवादः। अथाप्युपा नार्थ एष वादस्तथापि गुणः शक्यते दोगैरप्युपसंहर्तुम् । नचात्र पंच ख्याविरोध आशंक्यः । सांपादिकाग्न्याभिप्राया षा पंचसंख्या नित्यानुवादभूता, न विधिसमवायिनीत्यदोषः । एवं प्राण वादेष्वप्यधिकस्य गुणस्येतरत्रोप हारो न विरुध्यते । नच आवापोद्वापभेदाद्वेद्यभेदो विद्याभेदश्चाशंक्यः । स्यचिद्वेद्यांशस्य आवापोद्वापयोरपि भूयसो वेद्यराशेः अभेदावगमा । तस्मादैकविद्यमेव ॥२॥

स्वाध्याय य तथात्वेन हि समाचारेऽधि राच ववच्च तन्निय ः ॥३॥

यदप्युक्तं— आथर्वणिकानां विद्यां प्रति शिरोव्रताद्यपेक्षणादन्येषां च तदनपेक्षणाद्विद्याभेद इति, तत्प्रत्युच्यते । स्वाध्यायस्यैष धर्मो, न विद्यायाः । कथमिदमवगम्यते ? यतस्तथात्वेन स्वाध्यायधर्मत्वेन समाचारे वेदव्रतोपदेशपरे ग्रंथे आथर्वणिका 'इदमपि वेदव्रतत्वेन व्याख्यातं' इति समामनन्ति । 'नैतदचीर्णव्रतोऽधीते' इति चाधिकृतविषयादेतच्छब्दादध्ययनशब्दाच्च स्वोपनिषदध्ययनधर्म एवैष इति निर्धार्यते । ननु च 'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णं' इति ब्रह्मविद्यासंयोगश्रवणादेकैव सर्वत्र ब्रह्मविद्येति संकीर्येतैष धर्मः। न। तत्राप्येतामिति प्रकृतप्रत्यवमर्शात्। प्रकृतत्वं च ब्रह्मविद्याया ग्रंथविशेषापेक्षमिति ग्रंथविशेषसंयोग्येवैष धर्मः । सववच्च तन्नियम इति निदर्शननिर्देशः । यथाच सवाः सप्त ौर्यादयः शतौदनपर्यंता वेदान्तरोदितत्रेताग्न्यनभिसंबंधात् आथर्वणोदितैकाग्न्यभि बंधाच्च आथर्वणिकानामेव नियम्यन्ते, तथैवायमपि धर्मः स्वाध्यायविशेष बंधात्तत्रै नियम्यते । तस्मादप्यनवद्यं विद्यैकत्वम् ॥३॥

दर्शयति च ॥४॥

दर्शयति च वेदोऽपि विद्यैकत्वं र्ववेदान्तेषु वेद्यैकत्वोपदेशात् ' र्वे वेदा यत्पदमामनन्ति' इति । तथा 'एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्ए मग्नावध्वर्यव एतं महाव्रते छंदोगाः' इति च । तथा 'महद्भयं वज्रमुद्यतम्' इति काठके उक्तस्येश्वरगुणस्य भयहेतुत्वस्य तैत्तिरीयके भेददर्शन-

निंदार्थं पराम र्शो दृश्यते 'यदा ह्येवैष एतस्मिन्नुदरमंतरं कुरुते । अथ तस्य भयं भवति । तत्त्वेव भयं विदुषोऽमन्वानस्य' इति । तथा वाजसनेयके प्रादेशमात्र पादितस्य वैश्वानरस्य छांदोग्ये सिद्धवदुपादानं 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' इति । तथा सर्ववेदान्तप्रत्ययत्वेनान्यत्र विहितानामुक्थादीनां अन्यत्रोपासनविधानायोपादानात्प्रायदर्शनन्यायेन उपासनानामपि सर्ववेदान्तप्रत्ययत्वसिद्धिः ॥४॥

## २ उप हाराधिकरणम् । सू० ५ ।

### उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥५॥

इदं प्रयोजनसूत्रम् । स्थिते चैवं सर्ववेदान्तप्रत्ययत्वे सर्वविज्ञानानां अन्यत्रोदितानां विज्ञानगुणानामन्यत्रापि माने विज्ञाने उपसंहारो भवति । अर्थाभेदात् । य एव हि तेषां गुणानामेकत्रार्थो विशिष्टविज्ञानोपकारकः, स एवान्यत्रापि । उभयत्रापि हि तदेवैकं विज्ञानम् । तस्मादुपसंहारः । विधिशेषवत् । यथाहि विधिशेषाणामग्निहोत्रादिधर्माणां तदेवैकमग्निहोत्रादि कर्म सर्वत्रेत्यर्थाभेदादुपसंहरणं, एवमिहापि । यदि हि विज्ञानभेदो भवेत्ततो विज्ञानान्तरनिबद्धत्वाद्गुणानां प्रकृतिविकृतिभावाभावाच्च न स्यादुपसंहारः । विज्ञानैकत्वे तु नैवमिति । अस्यैव तु प्रयोजनसूत्रस्य प्रपंचः 'सर्वाभेदात्' इत्यारभ्य भविष्यति ॥५॥

## ३ अन्यथात्वाधिकरण । सू० ६–८ ।

### अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥६॥

वाजसनेयके 'ते ह देवा ऊचुर्हन्तासुरान्यज्ञ उद्गीथेनात्ययामेति' 'ते वाचमूचुस्त्वं न उद्गाय' इति प्रक्रम्य, वागादीन्प्राणानसुरपाप्मविद्धत्वेन निंदित्वा, मुख्यप्राणपरिग्रहः पठ्यते— 'अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्' इति । तथा छांदोग्येऽपि— 'तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिभविष्यामः' इति प्रक्रम्य इतरान्प्राणानसुरपाप्मविद्धत्वेन निंदित्वा, तथैव मुख्यप्राणपरिग्रहः प ते— 'अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासांचक्रिरे' इति । उभयत्रापि च प्राणप्रशंसया प्राणविद्याविधिरध्यवसीयते । तत्र संशयः— किमत्र विद्याभेदः स्यादाहोस्विद्विद्यैकत्वमिति । किं तावत्प्राप्तं? पूर्वेण न्यायेन विद्यैकत्वमिति ।

ननु न युक्तं विद्यैकत्वं प्रक्रमभेदात् । अन्यथा हि प्रक्रमन्ते वाजसनेयिनोऽन्यथा छंदोगाः । 'त्वं न उद्गाय' इति वाजसनेयिन उद्गीथस्य कर्तृत्वेन प्राणं आमनन्ति । छंदोगास्तु उद्गीथत्वेन 'तमुद्गीथमुपासांचक्रिरे' इति । तत्कथं विद्यैकत्वं स्यादिति चेत् । नैष दोषः । न ह्येतावता विशेषेण विद्यैकत्वमपगच्छति । अविशेषस्यापि बहुतरस्य प्रतीयमानत्वात् । तथाहि— देवासुरसंग्रामोपक्रमत्वं, असुरात्ययाभिप्रायः, उद्गीथोपन्यासो, वागादिसंकीर्तनं, तन्निंदया मुख्यप्राणव्यपाश्रयः, तद्वीर्याच्चासुरविध्वंसनमश्मलोष्टनिदर्शनेन, इत्येवं बहवोऽर्था उभयत्राप्यविशिष्टाः प्रतीयन्ते । वाजसनेयकेऽपि च उद्गीथसामानाधिकरण्यं, प्राणस्य श्रुतम्— 'एष उ वा उद्गीथः' इति । तस्माच्छांदोग्येऽपि कर्तृत्वं लक्षयितव्यम् । तस्माच्च विद्यैकत्वमिति ॥६॥

न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥७॥

न वा विद्यैकत्वमत्र न्याय्यं, विद्याभेद एवात्र न्याय्यः । कस्मात्? प्रकरणभेदादिति । प्रक्रमभेदादित्यर्थः । तथाहि— इह प्रक्रमभेदो दृश्यते । छांदोग्ये तावत्— 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्येवमुद्गीथावयवस्योंकारस्योपास्यत्वं प्रस्तुत्य, रसतमादिगुणोपव्याख्यानं तत्र कृत्वा, 'अथ खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति' इति पुनरपि तमेवोद्गीथावयवमोंकारमनुवर्त्य, देवासुराख्यायिकाद्वारेण तं 'प्राणमुद्गीथमुपासांचक्रिरे' इत्याह । तत्र यदि उद्गीथशब्देन सकला भक्तिरभिप्रेयेत, तस्याश्च कर्तोद्गातर्त्विक्, तत उपक्रमश्चोपरुध्येत, लक्षणा च प्रसज्येत । उपक्रमानुरोधेन चैकस्मिन्वाक्ये उपसंहारेण भवितव्यम् । तस्मादत्र तावदुद्गीथावयवे ओंकारे प्राणदृष्टिरुपदिश्यते । वाजसनेयके तु उद्गीथशब्देनावयवग्रहणे कारणाभावात्सकलैव भक्तिरावेद्यते । 'त्वं न उद्गाय' इत्यपि तस्याः कर्तोद्गातार्त्विक्प्राणत्वेन निरूप्यत इति प्रस्थानान्तरम् । यदपि तत्रोद्गीथसामानाधिकरण्यं प्राणस्य, तदपि उद्गातृत्वेनैव दिदर्शयिषितस्य प्राणस्य सर्वात्मत्वप्रतिपादनार्थमिति न विद्यैकत्वमावहति । सकलभक्तिविषय एव च तत्राप्युद्गीथशब्द इति वैषम्यम् । नच प्राणस्योद्गातृत्वं असंभवेन हेतुना परित्यज्यते, उद्गीथभाववदुद्गातृभावस्याप्युपासनार्थत्वेन उपदिश्यमानत्वात् । प्राणवीर्येणैव चोद्गातौद्गात्रं करोतीति नास्त्यसंभवः । तथाच तत्रैव श्रावितम्— वाचा च ह्येव स प्राणेन

चोदगायत्' इति । नच विवक्षितार्थभेदेऽवगम्यमाने वाक्यच्छायानु रमात्रेण मानार्थत्वमध्यवसातुं युक्तम् । थाहि अभ्युदयवाक्ये पशुका वाक्ये च— 'त्रेधा तंडुलान्विभजेद्ये ध्यमाः स्युस्तानग्नये, दात्रे पुरोडाशमष्टा - पालं कुर्यात्' इत्यादिनिर्देशसाम्येऽपि, उपक्र भेदादभ्युदयवाक्ये देव ाप-नयोऽध्यवसितः, पशुकामवाक्ये तु यागविधिः । तथेहाप्युक्रमभेदाद्विद्याभेदः। परोवरीयस्त्वादिवत् । यथा परमात्मद चध्यास ाम्येऽपि 'आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम्' ' एष परोवरीयानुद्गीथः स एषोऽनं :' इति परोवरीयस्त्वगुणविशिष्टं उद्गीथोपासनं अक्ष्यादित्यादिगतहिरण्यश्मश्रुत्वादि-गुणविशिष्टोद्गीथोपासनाद्भिन्नम् । नच इतरेतरगुणोप हार एकस्यामपि शाखायां तद्वच्छाखान्तरस्थेष्वपि एवंजातीयकेषूपासनेष्विति ॥७॥

संज्ञातश्चेत्तदुक्तमस्ति तदपि ॥८॥

अथोच्येत ंज्ञैकत्वाद्विद्यैकत्वमत्र न्याय्यं, उद्गीथविद्येति ह्युभयत्राप्येका संज्ञेति । तदपि नोपपद्यते । उक्तं ह्येतत्— 'न वा प्रकरणभेदात्परोवरीयस्त्वादिवत्' [३.३.७] इति । तदेव चात्र न्याय्यतरं श्रुत्यक्षरानुगतं हि । तत्संज्ञैकत्वं तु श्रुत्यक्षरबाह्यं उद्गीथशब्दमात्रप्रयोगाल्लौकिकैर्व्यवहर्तृभिरुपचर्यते । अस्ति चैतत्संज्ञैकत्वं प्रसिद्धभेदेष्वपि परोवरीयस्त्वाद्युपा नेषूद्गीथविद्येति । तथा प्रसिद्धभेदानामपि अग्निहोत्रदर्शपूर्णमासादीनां काठकैकग्रंथपरिपठितानां काठक ंज्ञैकत्वं दृश्यते, तथेहापि भविष्यति । यत्र तु नास्ति श्चिदेवंजातीयको भेदहेतुः, तत्र भवतु संज्ञैकत्वाद्विद्यैकत्वं यथा संवर्गविद्यादिषु ॥८॥

४ व्याप्त्यधिकरण । सू० ९ ।

व्याप्ते समंज ॥९॥

'ओमित्येतदक्षरमुद्गीथमुपासी ' इत्यत्र अक्षरोद्गीथशब्दयोः सामानाधिकरण्ये श्रूयमाणेऽध्या ापवादैकत्वविशेषणपक्षाणां प्रतिभा नात्कतमोऽत्र पक्षो न्याय्यः स्यादिति विचारः । त्राध्यासो नाम द्वयोर्वस्तुनोरानिवर्तितायामेव अन्य र द्धौ अन्यतर द्धिरध्यस्यते । यस्मिन्नितरबुद्धिरध्यस्यतेऽनु र्तत एव तास्मिंस्तद्बुद्धिः अध्यस्ते रबुद्धावपि । यथा नाम्नि ब्र बुद्धौ अध्यस्य ा-यामप्यनुवर्तत एव ना द्धिः, न ब्रह्मबुद्ध्या निवर्तते । यथावा तिमा-

दिषु वि वादिबुद्ध्यध्यासः । एवमिहाप्यक्षरे उद्गीथबुद्धिरध्यस्येत, उद्गीथे वाऽक्षरबुद्धिरिति । अपवादो नाम— यत्र कस्मिंश्चिद्वस्तुनि पूर्वनिविष्टायां मिथ्याबुद्धौ निश्चितायां पश्चादुपजायमाना यथार्था बुद्धिः पूर्वनिविष्टाया मिथ्याबुद्धेर्निवर्तिका भवति । यथा देहेन्द्रिय ंघाते आत्मबुद्धिः आत्मन्येवात्मबुद्ध्या पश्चाद्भाविन्या 'तत्त्वमसि' इत्यनया यथार्थबुद्ध्या निवर्त्यते । यथा वा दिग्भ्रान्तिबुद्धिर्दिग्याथात्म्यबुद्ध्या निवर्त्यते । एवमिहाप्यक्षरबुद्ध्योद्गीथबुद्धिर्निवर्त्यें , उद्गीथबुद्ध्या वाक्षरबुद्धिरिति । एकत्वं त्वक्षरोद्गीथशब्दयोः अनातिरिक्तार्थवृत्तित्वम् । यथा द्विजोत्तमो ब्राह्मणो भूमिदेव इति । विशेषणं पुनः र्ववेदव्यापिनः ओमित्येतस्याक्षरस्य ग्रहणप्र ंगे औद्गात्रविशेषस्द समर्पणम् । यथा नीलं यदुत्पलं तदानयेति । एवमिहाप्युद्गीथो य ॐकारस्तमुपा ीतेति । एवमेतस्मिन्सामानाधिकरण्यवाक्ये विमृश्यमाने एते पक्षाः प्रतिभान्ति । तत्र अन्यतमनिर्धारणकारणाभावादनिर्धारणप्राप्तौ इदमुच्यते— व्याप्तेश्च मंजसमिति । च शब्दोऽयं तु-शब्दस्थाननिवेशी पक्षत्रयव्यावर्तनप्रयोजनः । तादिह त्रयः पक्षाः सावद्या इति पर्युदस्यन्ते । विशेषणपक्ष एवैको निरवद्य इत्युपादीयते । तत्राध्यासे तावद्या बुद्धिरितरत्राध्यस्यते, तच्छब्दस्य लक्षणावृत्तित्वं प्रसज्येत, तत्फलं च कल्प्येत । श्रूयत एव फलं 'आपयिता ह वै कामानां भवति' इत्यादीति चेत् । न । तस्यान्यफलत्वात् । आप्त्यादिदृष्टिफलं हि तत् नोद्गीथाध्या फलम् । अपवादेऽपि समानः फलाभावः । मिथ्याज्ञाननिवृत्तिः फलमिति चेत् । न । पुरुषार्थोपयोगानवगमात् । नच कदाचिदप्योंकारादोंकारबुद्धिर्निवर्तेत उद्गीथाद्वोद्गीथबुद्धिः । नचेदं वाक्यं वस्तुतत्त्वप्रतिपादनपरम् । उपासनाविधिपरत्वात् । नाप्येकत्वपक्षः संगच्छते । निष्प्रयोजनं हि तदा शब्दद्वयोच्चारणं स्यात् । एकेनैव विवक्षितार्थसमर्पणात् । नच हौत्रविषये आध्वर्यवविषये वाऽक्षरे ओंकारशब्दवाच्ये उद्गीथशब्दप्रसि द्धिररि । नापि सकलायां साम्नो द्वितीयायां भक्तौ उद्गीथशब्दवाच्यायामोंकारशब्दप्रसिद्धिः येनानातिरिक्तार्थता स्यात् । परिशोद्विशेषणपक्षः परिगृह्यते । व्याप्तेः र्ववेदसाधारण्यात् । सर्वव्याप्यक्षरमिह मा प्र ंजि इत्यत उद्गीथशब्देनाक्षरं विशेष्य — कथं नामोद्गीथावय भूत ओंकारो गृह्येतेति । न अस्मिन्नपि पक्षे माना लक्षणा । उद्गीथशब्द या -

यवलक्षणार्थत्वात्। सत्यमेवमेतत्। लक्षणायामपि संनिकर्षविप्रकर्षौ भवत एव। अध्यासपक्षे ह्यर्थान्तरबुद्धिरर्थान्तरे निक्षिप्य इति विप्रकृष्टा लक्षणा, विशेषणपक्षे त्ववयविवचनेन शब्देनादयवः समर्प्यत इति संनिकृष्टा। समुदायेषु हि प्रवृत्ताः शब्दा अवयवेष्वपि प्रवर्तमाना दृष्टाः पटग्रामादिषु। अतश्च व्याप्तेर्हेतोः 'ओमित्येतदक्षरं' इत्येतस्य 'उद्गीथं' इत्येतद्विशेषणमिति समंजसमेतन्निरवद्यामित्यर्थः ॥९॥

## ५ सर्वाभेदाधिकरणम्। सू० १०।

### सर्वाभेदादन्यत्रेमे ॥१०॥

वाजिनां छंदोगानां च प्राणसंवादे श्रैष्ठ्यगुणान्वितस्य प्राणस्योपास्यत्वमुक्तम्। वागादयोऽपि हि तत्र वसिष्ठत्वादिगुणान्विता उक्ताः। ते च गुणाः प्राणे पुनः प्रत्यर्पिताः— 'यद्वा अहं वसिष्ठाऽस्मि त्वं तद्वसिष्ठोऽसि' इत्यादिना। अन्येषामपि तु शाखिनां कौषीतकिप्रभृतीनां प्राणसंवादेषु "अथातो निःश्रेयसादानम्" "एता ह वै देवता अहंश्रेयसे विवदमानाः" इत्येवंजातीयकेषु प्राणस्य श्रैष्ठ्यमुक्तं, न त्विमे वसिष्ठत्वादयोऽपि गुणा उक्ताः। तत्र संशयः— किमिमे वसिष्ठत्वादयो गुणाः क्वचिदुक्ता अन्यत्राप्यस्येरन्नुत नास्येरन्निति। तत्र प्राप्तं तावत् नास्येरन्निति। कुतः? एवं-शब्दसंयोगात्। 'अथो य एवं विद्वान्प्राणे निःश्रेयसं विदित्वा' इति हि तत्रतत्र एवं-शब्देन वेद्यं वस्तु निवेद्यते। एवं-शब्दश्च संनिहितावलंबनो, न शाखान्तरपरिपाठितमेवंजातीयकं गुणजातं शक्नोति निवेदयितुम्। तस्मात्स्वप्रकरणस्थैरेव गुणैर्निराकांक्षत्वमिति। एवं प्राप्ते प्रत्याह— अस्येरन्निमे गुणाः क्वचिदुक्ता वसिष्ठत्वादयोऽन्यत्रापि। कुतः? सर्वाभेदात्। सर्वत्रैव हि तदेवैकं प्राणविज्ञानमभिन्नं प्रत्यभिज्ञायते। प्राणसंवादादिसारूप्यात्। अभेदे च विज्ञानस्य कथमिमे गुणाः क्वचिदुक्ता अन्यत्र नास्येरन्। नन्वेवं-शब्दः तत्र तत्र भेदेनैवंजातीयकं गुणजातं वेद्यत्वाय मर्पयतीत्युक्तम्। अत्रोच्यते यद्यपि कौषीतकिब्राह्मणगतेन एवं-शब्देन वाजसनेयिब्राह्मणग गुणजातमसंशब्दितं असंनिहितत्वात् तथापि तस्मिन्नेव विज्ञाने वाजसनेयिब्राह्मणगतेन एवं-शब्देन तत्संशब्दितामिति। न परशाखागतमप्याभिन्नाविज्ञानावबद्धं गुणजातं स्वशाखागताद्विशिष्यते। नचैवं सति श्रुतहानिरश्रुतकल्पना

वा भवति । ए स्यामपि हि शाखायां श्रुता गुणाः श्रुता एव सर्वत्र भवन्ति, गुणवतो भेदाभावात् । नहि देवदत्तः शौर्यादिगुणत्वेन स्वदेशे प्रा द्धो देशान्तरं गतः तद्देश्यैरविभावितशौर्यादिगुणोऽप्यतद्गुणो भवति । यथाच तत्र पारिचयाविशेषाद्देशान्तरेऽपि देवदत्तगुणा विभाव्यन्ते, एवमभियोगविशेषाच्छाखान्तरेऽप्युपास्या गुणाः शाखान्तरेऽप्यस्येरन् । तस्मादेकप्रधानसंबद्धा धर्मा एकत्राप्युच्यमानाः सर्वत्रैवोपसंहर्तव्या इति ॥१०॥

६ आनंदाद्यधिकरण । सू० ११–१३ ।

आनंदादयः प्रधानस्य ॥११॥

ब्रह्मस्वरूपप्रतिपादनपरासु श्रुतिषु आनंदरूपत्वं विज्ञानघनत्वं सर्वगतत्वं सर्वात्मत्वं इत्येवंजातीयका ब्रह्मणो धर्माः क्वचित्केचित् श्रूयन्ते । तेषु संशयः— किमानंदादयो ब्रह्मधर्मा यत्र यावन्तः श्रूयन्ते तावन्त एव तत्र प्रतिपत्तव्याः, किंवा सर्वे सर्वत्रेति । तत्र यथाश्रुतिविभागं धर्मप्रतिपत्तौ प्राप्तायामिदमुच्यते— आनंदादयः प्रधानस्य ब्रह्मणो धर्माः सर्वे सर्वत्र प्रतिपत्तव्याः । कस्मात् ? सर्वाभेदादेव । सर्वत्र हि तदेवैकं प्रधानं विशेष्यं ब्रह्म न भिद्यते । तस्मात्सार्वत्रिकत्वं ब्रह्मधर्माणां तेनैव पूर्वाधिकरणोदितेन देवदत्तशौर्यादिनिदर्शनेन ॥११॥

नन्वेवं सति प्रियशिरस्त्वादयोऽपि धर्माः सर्वे सर्वत्र संकीर्येरन् । तथाहि तैत्तिरीयके आनंदमयमात्मानं प्रक्रम्याम्नायते— 'तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः । आनंद आत्मा । ब्रह्म पुच्छं प्रतिष्ठा' इति । अत उत्तरं पठति—

प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥१२॥

प्रियशिरस्त्वादीनां धर्माणां तैत्तिरीयके आम्नातानां नास्त्यन्यत्र प्राप्तिः । यत्कारणं प्रियं मोदः प्रमोद आनंद इत्येते परस्परापेक्षया भोक्त्रंतरापेक्षया चोपचितापचितरूपा उपलभ्यन्ते । उपचयापचयौ च ति भेदे संभवतः । निर्भेदं तु ब्रह्म 'एकमेवाद्वितीयम्' इत्यादिश्रुतिभ्यः । नचैते प्रियशिरस्त्वादयो ब्रह्मधर्माः, कोशधर्मास्त्वेते इत्युपादिष्टमस्माभिः 'आनंदमयोऽभ्या ात्' [१.१.१२]इत्यत्र । अपिच परस्मिन्ब्रह्मणि चित्तावतारोपायमात्रत्वेनैते परिकल्प्यन्ते न द्रष्टव्यत्वेन । एवमपि सुतरामन्यत्राप्राप्तिः प्रियशिरस्त्वादीनाम् । ब्रह्मधर्मा-

स्त्वेतान्क । न्यायमात्रमिदमाचार्येण प्रदर्शि प्रियशिरस्त्वाद्यप्राप्तिरिति । च न्यायोऽन्येषु निश्चितेषु ब्रह्मधर्मेषूपासनायोपदिश्य नेषु नेतव्यः, यद्वा-मत्वादिषु त्यकामत्वादिषु च । तेषु हि सत्यप्युपास्यस्य ह्मण एकत्वे, प्रक्रमभेदादुपासनाभेदे सति, न्योन्यधर्माणामन्योन्यत्र प्राप्तिः । यथा च द्वे नार्यावेकं नृपतिमुपासाते छत्रेणैका चामरेणान्या, तत्रोपास्यैकत्वेऽप्युपा नाभेदो धर्मव्यवस्था च भवति, एवमिहापीति । उपचितापचितगुणत्वं हि सति भेदव्यवहारे सगुणे ब्रह्मण्युपपद्यते न निर्गुणे परस्मिन्ब्रह्मणि । अतो न सत्यकामत्वादीनां धर्माणां क्वचित् श्रुतानां र्वत्र प्राप्तिरित्यर्थः ॥१२॥

इतरे त्वर्थसामान्यात् ॥१३॥

इतरे त्वानंदादयो धर्मा ब्रह्मस्वरूपप्रतिपादनायैव उच्यमाना अर्थ ।न्यात्प्रतिपाद्यस्य ब्रह्मणो धर्मिण एकत्वात्सर्वे सर्वत्र प्रतीयेरन्निति वैषम्यं, प्रतिपत्तिमात्रप्रयोजना हि ते इति ॥१३॥

आध्यानाधिकरणम् । सू० १४–१५ ।

आध्यानाय प्रयोजनाभावा ॥१४॥

काठके हि पठ्यते 'इंद्रियेभ्यः परा र्था अर्थेभ्यश्च परं नः । मनसस परा बुद्धिः' इत्यारभ्य 'पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' ति । तत्र संशयः— किमिमे सर्व एवार्थादयः त स्ततः परत्वेन पाद्यन्ते उत पुरुष एवैभ्यः सर्वेभ्यः परः प्रतिपाद्यत इति । तत्र ताव-त्सर्वेषामेवैषां परत्वेन प्रतिपादनमिति भवति मतिः । थाहि यते— 'इदमस्मात्परमिदमस्मात्परम्' इति । ननु हुष्वर्थेषु परत्वेन प्रतिपिपादयि-षितेषु वाक्यभेदः स्यात् । नैष दोषः । वाक्यबहुत्वोपपत्तेः । बहून्येव ह्येतानि वाक्यानि भवन्ति हुविषयान्परत्वोपेतान्प्रतिपादयितुम् । तस्मा-त्प्रत्येकमेषां परत्वप्रतिपादनमिति । एवं प्राप्ते ब्रूमः— पुरुष एव ह्येभ्यः सर्वेभ्यः परः प्रतिपाद्यत इति युक्तं, न प्रत्येकमेषां परत्वप्रतिपादनम् । मात्? प्रयोजनाभावात् । नहीतरेषु परत्वेन प्रतिपन्नेषु किंचित्प्रयोजनं दृश्यते श्रूयते वा । पुरुषे त्विंद्रियादिभ्यः परस्मिन्सर्वानर्थ तातीते प्रतिपन्ने दृश्यते प्रयोजनं, मोक्षसिद्धिः । थाच श्रुतिः 'निचाय्य तं मृत्युमुखा-त्प्रमुच्यते' इति । अपिच परप्रतिषेधेन काष्ठाशब्देन च पुरुषविषयमादरं

दर्शयन् रुषप्रतिपत्त्यर्थैव पूर्वापरप्रवा ोक्तिरि दर्शयति— आध्यानायेति आध्यानपूर्वकाय सम्यग्दर्शनायेत्यर्थः । सम्यग्दर्शनार्थमेव हीह: आध्या मुपदिश्यते न त्वाध्यानमेव स्वप्रधानम् ॥१४॥

आत्‍ शब्दाच्च ॥१५॥

इतश्च पुरुषप्रतिपत्त्यर्थैव इयं इंद्रियादिप्रवाहोक्तिः । यत्कारणं 'एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः' इति प्रकृतं पुरुषमात्मेत्याह । अतश्चानात्मत्वमितरेषां विवक्षितामिति गम्यते । तस्यैव च दुर्विज्ञानतां स्कृतमातिगम्य ां च दर्शयति । तद्विज्ञानायै च 'यच्छेद्वाङ्मनसी प्राज्ञः' इत्याध्यानं विदधाति । तद्व्याख्यातं 'आनुमानिकमप्येकेषाम्' [१.४.१] इत्यत्र । एवमनेकप्र ारः आशयातिशयः श्रुतेः पुरुषे लक्ष्यते नेतरेषु । अपिच ' ोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इत्युक्ते, किं तदध्वनः पारं विष्णोः परमं पदमित्यस्यामाकांक्षायां इंद्रियाद्यनुक्रमणात्परमपदप्रतिपत्त्यर्थ एवायमाम्नाय इत्यवसीयते ॥१५

८ आत्मगृहीत्यधिकरणम् । सू० १६–१७ ।

आत्मगृहीतिरितरवदुत्तरात् ॥ ६॥

ऐतरेयके श्रूयते— 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत्स ईक्षत लो ान्नु सृजा' इति 'स इमाँल्लोकानसृजतांभो, मरीचीर्मरमापः' इत्यादि । तत्र शयः— किं पर एवात्मा इहात्मशब्देनाभिलप्यते उतान्यः कश्चिदिति । किं तावत्प्राप्तं? न परमात्मेहात्मशब्दाभि प्यो भवितुमर्हतीति । कस्मात्? वाक्यान्वयदर्शनात् । ननु वाक्यान्वयः तरां परमात्मविषयो दृश्यते, प्रागुत्पत्तेरात्मैकत्वावधारणात् । ईक्षणपूर्वकस्रष्टृत्ववचनाच्च । नेत्युच्यते । लोक ृष्टिवचनात् । परमात्मनि हि स्रष्टरि परिगृह्यमाणे, महाभूतसृष्टिरादौ वक्तव्या । लोकसृ स्त्विह आदावुच्यते । लोकाश्च महाभूत -निवेशविशेषाः । थाच अंभःप्रभृतींल्लोकत्वेनैव निर्ब्रवीति 'अदोऽम्भः परेण दिवम्' इत्यादिना । लोक ृष्टिश्च परमेश्वराधिष्ठितेनापरेण केनचिदीश्वरेण क्रियते इति श्रुतिस्मृत्योरुपलभ्यते । थाहि श्रुतिर्भवति— 'आत्मैवेदमग्र आसीत्पुरुषविधः' इत्याद्या । स्मृतिरपि " वै शरीरी प्रथमः स वै पुरु उच्यते । आदिक ् स भूतानां ाग्रे र्तत" इति । ऐतरेयि-

णोऽपि 'अथातो रेतसः सृष्टिः प्रजापते रे ।ो देवाः' इत्यत्र पूर्वस्मिन्प्रकरणे प्रजापतिकर्तृकां विचित्रां सृष्टिमामनन्ति। आत्मशब्दोऽपि तस्मिन्प्रयुज्यमानो दृश्यते— 'आत्मैवेदमग्र आसीत्पुरुषविधः' इत्यत्र । एकत्वावधारणमपि प्रागुत्पत्तेः स्वविकारापेक्षमुपपद्यते । ईक्षणमपि तस्य चेतनत्वाभ्युपगमादुपपन्नम् । अपिच 'ताभ्यो गामानयत्ताभ्योऽश्वमानयत्ताभ्यः पुरुषमानयत्ता अब्रुवन्' इत्येवंजातीयको भूयान्व्यापारविशेषो लौकिकेषु विशेषवत्स्वात्मसु प्रसिद्ध इहानुगम्यते । तस्माद्विशेषवानेव कश्चिदिहात्मा स्यादिति । एवं प्राप्ते ब्रूमः— पर एवात्मेह आत्मशब्देन गृह्यते इतरवत् । यथेतरेषु सृष्टिश्रवणेषु 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्येवमादिषु परस्यात्मनो ग्रहणम् । तथा चेतरस्मिंल्लौकिकात्मशब्दप्रयोगे प्रत्यगात्मैव मुख्य आत्मशब्देन गृह्यते, तथेहापि भवितुमर्हति । यत्र तु 'आत्मैवेदमग्र आसीत्' इत्येवमादौ 'पुरुषविधः' इत्येवमादि विशेषणान्तरं श्रूयते, भवेत्तत्र विशेषवत आत्मनो ग्रहणम् । अत्र पुनः परमात्मग्रहणानुगुणमेव विशेषणमप्युत्तरमुपलभ्यते 'स ईक्षत लोकान्नु सृजा इति' 'स इमाँल्लोकानसृजत' इत्येवमादि । तस्मात्तस्यैव ग्रहणमिति न्याय्यम् ॥१६॥

अन्वयादिति चेत्स्यादवधारणात् ॥१७॥

वाक्यान्वयदर्शनान्न परमात्मग्रहणमिति पुनर्यदुक्तं तत्परिहर्तव्यमिति । अत्रोच्यते— स्यादवधारणादिति । भवेदुपपन्नं परमात्मनो ग्रहणम् । कस्मात् ? अवधारणात् । परमात्मग्रहणे हि प्रागुत्पत्तेः आत्मैकत्वावधारणं आंजसमवकल्पते । अन्यथा ह्यनांजसं तत्परिकल्प्येत । लोकसृष्टिवचनं तु श्रुत्यंतरप्रसिद्धमहाभूतसृष्ट्यनंतरमिति योजयिष्यामि । यथा 'तत्तेजोऽसृजत' इत्येतत् श्रुत्यंतरप्रसिद्धावियद्वायुसृष्ट्यनंतरामिति अयूयुजं, एवमिहापि । श्रुत्यंतरप्रसिद्धो हि मानाविषयो विशेषः श्रुत्यंतरेषूपसंहर्तव्यो भवति । योऽप्ययं व्यापारविशेषानुगमः 'ताभ्यो गामानयत्' इत्येवमादिः सोऽपि विवक्षितार्थावधारणानुगुण्येनैव ग्रहीतव्यः । नह्ययं सकलः कथाप्रबंधो विवक्षित इति शक्यते वक्तुं, तत्प्रतिपत्तौ पुरुषार्थाभावात् । ब्रह्मात्मत्वं त्विह विवक्षितम् । तथाहि अंभःप्रभृतीनां लोकानां लोकपालानां च अग्न्यादीनां सृष्टिं शिष्ट्वा, करणानि करणायतनं च शरीरमुपदिश्य, स ए स्रष्टा, क न्विदं मद्दते

स्यात्' इति वीक्ष्य, इदं शरीरं प्रविवेशेति दर्शयति 'एतमेव सीमानं विदार्यै या द्वारा प्रापद्य ' इति । पुनश्च 'यदि वाचाभिव्याहृ यदि प्राणेनाभिप्राणितम्' इत्येवमादिना करणव्यापारविवेचनपूर्वकम् 'अथ कोऽहम्' इति वीक्ष्य ' एतमेव पुरुषं ब्रह्म ततममपश्यत्' इति ब्रह्मात्मत्वदर्शनमवधारयति । तथोपरिष्टात् 'एष ब्रह्मैष इंद्रः' इत्यादिना समस्तं भेदजातं सह महाभूतैरनुक्रम्य 'सर्वे तत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म' इति ब्रह्मात्मत्वदर्शनमेवावधारयति । तस्मादिहात्मगृहीतिरित्यनप ादम् ॥

अपरा योजना— **आत्मगृहीतिरितरवदुत्तरात्** । वाजसनेके 'कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यंतर्ज्योतिः पुरुषः' इत्यात्मशब्देनोपक्रम्य तस्यैव सर्वसंगविनिर्मुक्तत्वप्रतिपादनेन ब्रह्मात्मतामवधारयति । थाह्युप हरति— 'स वा एष महानज आत्माजरोऽमरोऽमृतोऽभयो ब्रह्म' इति । छांदोग्ये तु 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इति अंतरेणैवात्मशब्दमुपक्रम्य उदर्के 'स आत्मा तत्त्वमसि' इति ादात्म्यमुपदिशति। तत्र संशयः— तुल्यार्थत्वं किमनयोराम्नानयोः यादतुल्यार्थत्वं वेति । अतुल्यार्थत्वमिति तावत्प्राप्तं, अतुल्यत्वादाम्नानयोः । नहि आम्नानवैषम्ये सति अर्थसाम्यं युक्तं प्रतिपत्तुं, आम्नानतंत्रत्वादर्थपरिग्रहस्य । वाजसनेयके चात्मशब्दोपक्रमादात्मतत्त्वोपदेश इति गम्यते । छांदोग्ये तु उपक्रमविपर्ययादुपदेशविपर्ययः । ननु छंदोगानामप्यस्त्युदर्के तादात्म्योपदेश इत्युक्तम् । त्यमुक्तम् । उपक्रमतंत्रत्वादुप हारस्य, ादात्म्यसंपात्तिः ति मन्यते । तथा प्राप्तेऽभिधीयते— आत्मगृहीतिः 'सदेव सोम्येदमग्र आसीत्' इत्यत्र छंदोगानामपि भवितुमर्हती रवत् । य । 'कतम आत्मा' इत्यत्र वाजसनेयिनामात्मगृहीतिः थैव । कस्मात् ? उत्तरात्तादात्म्योपदेशात् । **अन्वयादिति चेत्स्यादवधारणात्** । यदुक्तमुपक्रमान्वयादुपक्रमे च आत्मशब्दश्रवणाभावान्नात्मगृहीतिरिति, तस्य कः परिहार इति चेत्सोऽभिधीयते स्यादवधारणादिति । भवेदुपपन्नेहात्मगृहीतिः । अवधारणात् । थाहि— 'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञा म्' इत्येकविज्ञानेन र्वविज्ञानमवधार्य, तत पिपादयिषया ' देव—' इत्याह । च्चात्मगृहीतौ त्यां संप-



extends everywhere

द्यते । अन्यथा हि योऽयं मुख्य आत्मा न विज्ञात इति, नैव सर्वविज्ञानं पद्येत । तथा प्रागुत्पत्तेरेकत्वावधारणं, जीवस्य त्मशब्देन परामर्शः, स्वापावस्थायां च तत्स्वभावसंपत्तिकथनं, परिचोदनापूर्वकं च पुनः पुनः 'तत्त्वमसि' इत्यवधारणं, इति च सर्वमेतत्तादात्म्यप्रतिपादनायामेव अवकल्पते न तादात्म्यसंपादनायाम् । नचात्र उपक्रमतंत्रत्वोपन्यासो न्याय्यः । नह्युपक्रमे आत्मत कीर्तनं अनात्मत्वसंकीर्तनं वास्ति । सामान्योपक्रमश्च न वाक्यशेषगतेन ि शेषेण विरुध्यते, विशेषाकांक्षित्वात्सामान्यस्य । सच्छब्दार्थोऽपि च पर्यालोच्यमानो न मुख्यादात्मनोऽन्यः संभवति, अतोऽन्यस्य वस्तुजातस्यारंभणशब्दादिभ्योऽनृतत्वोपपत्तेः । आम्नानवैषम्यमपि नावश्यमर्थवैषम्यमावहति । आहर पात्रं पात्रमाहर इत्येवमादिष्वर्थसाम्येऽपि तद्दर्शनात् । तस्मादेवंजातीयकेषु वाक्येषु प्रतिपादनप्रकारभेदेऽपि प्रतिपाद्यार्थाभेद इति सिद्धम् ॥१७॥

## ९ कार्याख्यानाधिकरणम् । सू० १८ ।

### कार्याख्यानादपूर्वम् ॥ ८॥

छंदोगा वाजसनेयिनश्च प्राणसंवादे श्वादिमर्यादं प्राणस्यान्नमाम्नाय तस्यैवापो वास आमनन्ति । अनंतरं च छंदोगा आमनन्ति— 'तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधाति' इति । वा सनेयिनश्चामनन्ति— 'तद्विद्वांसः श्रोत्रिया अशिष्यन्त आचामन्त्यशित्वाचामन्त्येतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते' 'तस्मादेवंविदशिष्यन्नाचामेदशित्वा चाचामेदेतमेव तदनमनग्नं कुरुते' इति । तत्र त्वाचमनमनग्नताचिंतनं च प्राणस्य प्रतीयते । तत्किमुभयमपि विधीयते, उताचमनमेव उतानग्नताचिंतनमेवेति विचार्यते । किं तावत्प्राप्तम् ? उभयमपि विधीयत इति । कुतः ? उभयस्याप्यवगम्यमानत्वात् । उभयमपि चैतदपूर्वत्वाद्विध्यर्हम् । अथवाचमनमेव विधीयते । विस्पष्टा हि तस्मिन्विधिविभक्तिः 'तस्मादेवंविदशिष्यन्नाचामेदशित्वा चाचामेत्' इति । तस्यैव स्तुत्यर्थमनग्नता कीर्तनमिति । एवं प्राप्ते ूमः नाचमनस्य विधेयत्वमुपपद्यते, कार्याख्यानात् । प्राप्तमेव हीदं कार्यत्वेनाचमनं प्रायत्यार्थं स्मृतिप्रसिद्धमन्वाख्यायते । नन्वियं श्रुतिस्तस्याः स्मृतेर्मूलं स्यात् । नेत्युच्यते । विषयनानात्वात् । सा ान्यविषया हि स्मृतिः

पुरुषमात्रसंबद्धं प्रायत्या माचमनं प्रापयति । श्रुतिस्तु प्राणविद्याप्रकरणपठिता तद्विषयमेवाचमनं विदधती विदध्यात् । नच भिन्नविषययोः श्रुतिस्मृत्योः मूलमूलिभावोऽवकल्पते । नचेयं श्रुतिः प्राणविद्या योगि अपूर्वमाचमनं विधास्यतीति शक्यमाश्रयितुम् । पूर्वस्यैव पुरुषमात्रसंयोगिन आचमनस्येह प्रत्यभिज्ञायमानत्वात् । अतएव च नोभयविधानम् । उभयविधाने च वाक्यं भिद्येत । तस्मात्प्रातमेवाशिशिषतामाशितवतां चोभयत आचमनं अनूद्य 'एतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते' इति प्राणस्यानग्नताकरणसंकल्पोऽनेन वाक्येनाचमनीयास्वप्सु प्राणविद्यासंबंधित्वेनापूर्व उपदिश्यते । नचायमनग्नतावादः आचमनस्तुत्यर्थ इति न्याय्यम् । आचमनस्याविधेयत्वात् । स्वयं च अनग्नता कल्पस्य विधेयत्वप्रतीतेः । नचैवं सत्येकस्याचमनस्योभयार्थताभ्युपगता भवति प्रायत्यार्थता परिधानार्थता चेति । क्रियान्तरत्वाभ्युपगमात् । क्रियान्तरमेव ह्याचमनं नाम प्रायत्यार्थं पुरुषस्याभ्युपगम्यते, तदीयासु त्वप्सु वासःसंकल्पनं नाम क्रियान्तरमेव परिधानार्थं प्राणस्याभ्युपगम्यत इत्यनवद्यम् । अपिच 'यदिदं किंचा श्वभ्य आ कृमिभ्य आ कीटपतंगेभ्यस्तत्तेऽन्नम्' इत्यत्र तावन्न सर्वान्नाभ्यवहारश्चोद्यत इति शक्यं वक्तुम् । अशब्दत्वादशक्यत्वाच्च । सर्वं तु प्राणस्यान्नमितीयमन्नदृष्टिश्चोद्यते । तत्साहचर्याच्च 'आपो वासः' इत्यत्रापि नापामाचमनं चोद्यते । प्रा द्धास्वेव त्वाचमनीयास्वप्सु परिधानदृष्टिश्चोद्यत इति युक्तम् । नह्यर्धवैशसं संभवति । अपिचाचामन्तीति वर्तमानापदेशित्वान्नायं शब्दो विधिक्षमः । ननु मन्यन्त इत्यपि समानं वर्तमानापदेशित्वम् । सत्यमेव एतत् । अवश्यविधेये त्वन्यतरस्मिन्वासःकार्याख्यानादपां वासःसंकल्पनमेवापूर्वं विधीयते, नाचमनं, पूर्ववद्धि तत् इत्युपपादितम् । यदप्युक्तं विस्पष्टा चाचमने विधिविभक्तिरिति, तदपि पूर्ववत्त्वेनैवाचमनस्य प्रत्युक्तम् । अतएव आचमनस्याविधित्सितत्वात् 'एतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते' इत्यत्रैव काण्वाः पर्यवस्यन्ति नामनन्ति 'तस्मादेवंवित्' इत्यादि । तस्मान्माध्यंदिनानामपि पाठे आचमनानुवादेनैवंवित्त्वमेव प्रकृतप्राणवासोवित्त्वं विधीयते इति प्रतिपत्तव्यम् । योऽप्ययमभ्युपगमः क्वचिदाचमनं विधीयते क्वचिद्वासोविज्ञानामिति ोऽपि न साधुः । 'आपो वा ' इत्यादिकाया वाक्यप्रवृत्तेः सर्वत्रैकरूप्यात् ।

तस्माद्वासोविज्ञानमेवेह विधीयते नाचमनमिति न्याय्यम् ॥१८॥

१० समानाधिकरणम् । सू० १९ ।

समान एवं चाभेदात् ॥१९॥

वाजसनेयिशाखायामग्निरहस्ये शांडिल्यनामांकिता विद्या विज्ञाता । तत्र च गुणाः श्रूयन्ते— 'आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपम्' इत्येवमादयः । तस्यामेव शाखायां बृहदारण्यके पुनः पठ्यते—'मनोमयोऽयं पुरुषो भाः सत्यस्तस्मिन्नंतर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किंच' इति । तत्र संशयः— किमियमेका विद्या अग्निरहस्यबृहदारण्यकयोर्गुणोपसंहारश्च, उत द्वे इमे विद्ये गुणानुपसंहारश्चेति । किं तावत्प्राप्तम्? विद्याभेदो गुणव्यवस्था चेति। कुतः? पौनरुक्त्यप्रसंगात् । भिन्नासु हि शाखास्वध्येतृवेदितृभेदात्पौनरुक्त्यपरिहारमालोच्य विद्यैकत्वमध्यवसाय एकत्रातिरिक्ता गुणा इतरत्रोपसंह्रियन्ते प्राणसंवादादिषु इत्युक्तम् । एकस्यां पुनः शाखायां अध्येतृवेदितृभेदाभावादशक्यपरिहारे पौनरुक्त्ये न विप्रकृष्टदेशस्थैका विद्या भवितुमर्हति । नचात्रैकमाम्नानं विद्याविधानार्थं अपरं गुणविधानार्थमिति विभागः संभवति । तदा ह्यतिरिक्ता एव गुणा इतरत्रेतरत्र चाम्नायेरन्न समानाः । समाना अपि तूभयत्राम्नायन्ते मनोमयत्वादयः । तस्मान्नान्योन्यगुणोपसंहार इति । एवं प्राप्ते ब्रूमहे— यथा भिन्नासु शाखासु विद्यैकत्वं गुणोपसंहारश्च भवति, एवमेकस्यामपि शाखायां भवितुमर्हति । उपास्याभेदात् । तदेव हि ब्रह्म मनोमयत्वादिगुणकमुभयत्राप्युपास्यमभिन्नं प्रत्यभिजानीमः । उपास्यं च रूपं विद्यायाः । नच विद्यमाने रूपाभेदे विद्याभेदमध्यवसातुं शक्नुमः । नापि विद्याऽभेदे गुणव्यवस्थानम् । ननु पौनरुक्त्यप्रसंगाद्विद्याभेदोऽध्यवसितः । नेत्युच्यते । अर्थविभागोपपत्तेः । एकं ह्याम्नानं विद्याविधानार्थमपरं गुणविधानार्थमिति न किंचिन्नोपपद्यते । नन्वेवं सति यदपठितमग्निरहस्ये, तदेव बृहदारण्यके पठितव्यम् 'स एष सर्वस्येशानः' इत्यादि । यत्तु पठितमेव 'मनोमयः' इत्यादि तन्न पठितव्यम् । नैष दोषः । तद्बलेनैव प्रदेशान्तरपठितविद्याप्रत्यभिज्ञानात् । समानगुणाम्नानेन हि विप्रकृष्टदेशां शांडिल्यविद्यां प्रत्यभिज्ञाप्य तस्यामीशानत्वाद्युपादिश्यते । अन्यथा हि कथं तस्यामयं गुण-

विधिरभिधीयते । अपिच अप्राप्तांशोपदेशेनार्थवति वाक्ये संजाते प्राप्तांशपरामर्शस्य नित्यानुवादतयाप्युपपद्यमानत्वान्न तद्बलेन प्रत्यभिज्ञा उपोदितुं शक्यते । तस्मादत्र समानायामपि शाखायां विद्यैकत्वं गुणोपसंहारश्च इत्युपपन्नम् ॥१९॥

११ बंधाधि रणम् । सू० २०-२१ ।

सं धादेवमन्यत्रापि ॥२०॥

बृहदारण्यके ' त्यं ब्रह्म' इत्युपक्रम्य 'तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन्मंडले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषः' इति तस्यैव सत्यस्य ब्रह्मणोऽधिदैवतमध्यात्मं चायतनविशेषमुपदिश्य, व्याहृतिशरीरत्वं च संपाद्य, द्वे उपनिषदावुपदिश्येते । तस्योपनिषदहरित्यधिदैवतम् । तस्योपनिषदहमित्यध्यात्मम् । तत्र शयः— किमविभागेनैवोभे अप्युपनिषदावुभयत्रानुसंधातव्ये उत विभागेन एकाधिदैवमेकाध्यात्ममिति ? तत्र सूत्रेणैवोपक्रमते— यथा शांडिल्यविद्यायां विभागेनाप्यधीतायां गुणोपसंहार उक्तः, एवमन्यत्राप्येवंजातीयके विषये भवितुमर्हति । एकविद्याभिसंबंधात् । एका हीयं सत्यविद्याधिदैवमध्यात्मं चाधीता । उपक्रमाभेदाद्व्यतिषक्तपाठाच्च । कथं तस्यां उदितो धर्मस्तस्यामेव न स्यात् । यो ह्याचार्ये कश्चिदनुगमनादिराचारश्चोदितः, ग्रामगतेऽरण्यगते च तुल्यवदेव भवति । तस्मादुभयोरप्युपनिषदोरुभयत्र प्राप्तिरिति ॥२०॥

एवं प्राप्ते प्रतिविधत्ते—

न वा विशे । ॥२१॥

नैव उभयोरुभयत्र प्राप्तिः । कस्मात् ? विशेषात् । उपासनस्थानविशेषोपनिबंधादित्यर्थः । कथं स्थानविशेषोपनिबंध इत्युच्यते— 'य एष एतस्मिन्मंडले पुरुषः' इति ह्याधिदैविकं पुरुषं प्रकृत्य तस्योपनिषदहरिति श्रावयति । 'योऽयं दक्षिणेऽक्षन्पुरुषः' इति चाध्यात्मिकं पुरुषं प्रकृत्य तस्योपनिषदहमिति । स्येति चैतत्संनिहितावलंबनं र्वनाम । तस्मादायनविशेषव्यपाश्रयेणैवैते उपनिषदावुपादिश्येते । कुत उभयोरुभयत्र प्राप्तिः । नन्वेक एवायमधिदैवतमध्यात्मं च पुरुषः, एकस्यैव त्यस्य ब्रह्मणः आयतनद्वयप्रतिपादनात् । सत्यमेवमेतत् । एकस्यापि त्ववस्थाविशेषोपादानेनैव

उपनिषद्विशेषोपदेशात् तदवस्थस्यैव सा भवितुमर्हति। अस्ति चायं दृष्टान्तः — सत्यप्याचार्यस्वरूपानपाये यदाचार्यस्यासीनस्यानुवर्तनं उक्तं न तत्तिष्ठतो भवति। यच्च तिष्ठत उक्तं न तदासीनस्येति। ग्रामारण्ययोस्तु आचार्यस्वरूपानपायात्तत्स्वरूपानुबद्धस्य च धर्मस्य ग्रामारण्यकृतविशेषाभावादुभयत्र तुल्यवद्भाव इत्यदृष्टान्तः सः। तस्माद्व्यवस्था अनयोरुपनिषदोः ॥२१॥

### दर्शयति च ॥२२॥

अपि च एवंजातीयकानां धर्माणां व्यवस्थेति लिंगदर्शनं भवति— 'तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम' इति। कथमस्य लिंगत्वमिति, तदुच्यते— अक्ष्यादित्यस्थानभेदभिन्नान्धर्मान् अन्योन्यस्मिन्ननुपसंहार्यान्पश्यन्निहातिदेशेनादित्यपुरुषगतान्रूपादीनक्षिपुरुषे उपसंहरति— 'तस्यैतस्य तदेव रूपम्' इत्यादिना। तस्माद्व्यवस्थिते एवैते उपनिषदाविति निर्णयः ॥२२॥

१२ संभृत्यधिकरणम्। सू० २३।

### संभृतिद्युव्याप्त्यपि चातः ॥२३॥

'ब्रह्मज्येष्ठा वीर्या संभृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान' इत्येवं राणायनीयानां खिलेषु वीर्यसंभृतिद्युनिवेशप्रभृतयो ब्रह्मणो विभूतयः पठ्यन्ते। तेषामेव चोपनिषदि शांडिल्याविद्याप्रभृतयो ब्रह्मविद्याः पठ्यन्ते। तासु ब्रह्मविद्यासु ता ब्रह्मविभूतयः उपसंह्रियेरन्न वेति विचारणायां, ब्रह्मसंबंधादुपसंहारप्राप्तावेवं पठति। संभृतिद्युव्याप्तिप्रभृतयो विभूतयः शांडिल्यविद्याप्रभृतिषु नोपसंहर्तव्याः। अतएव चायतनविशेषयोगात्। तथाहि शांडिल्यविद्यायां हृदयायतनत्वं ब्रह्मण उक्तम्— 'एष म आत्माऽन्तर्हृदये' इति। तद्वदेव दहरविद्यायामपि 'दहरं पुंडरीकं वेश्म दहरोऽस्मिन्नंतराकाशः' इति। उपकोसलविद्यायां तु अक्ष्यायतनत्वम् 'य एषोऽक्षिणि पुरुषो दृश्यते' इति। एवं तत्र तत्र तत्तदाध्यात्मिकमायतनमेतासु विद्यासु प्रतीयते। आधिदैविक्यस्त्वेता विभूतयः संभृतिद्युव्याप्तिप्रभृतयस्तासां कुत एतासु प्राप्तिः। ननु एतास्वपि आधिदैविक्यो विभूतयः श्रूयन्ते— 'ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः' 'एष उ एव भामनीरेष हि सर्वेषु लोकेषु भाति' 'यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन्द्यावापृथिवी अंतरेव

माहिते' इत्येवमाद्याः । न्ति चान्या आयतनविशेषहीना अपीह ब्रह्मविद्याः षोडशकलाद्याः । सत्यमेवमेतत् । तथाप्यत्र विद्यते विशेषः संभृत्याद्यनुपसंहारहेतुः । मा गुणाम्नानेन हि प्रत्युपस्थापिता विप्रकृ देशास्वपि विद्या विप्रकृ देशगुणा उपसंह्रियेरन्निति युक्तम् । भृत्यादयस्तु शांडिल्यादिवाक्यगोचराश्च मनोमयत्वादयो गुणाः परस्परव्यावृत्तस्वरूपत्वान्न प्रदेन्तरवर्तिविद्याप्रत्युपस्थापनक्षमाः । नच ब्र बंधमात्रेण प्रदेशान्तरवर्तिविद्याप्रत्युपस्थापनमित्युच्यते । विद्याभेदेऽपि तदुपपत्तेः । एकमपि हि ब्रह्म विभूतिभेदैरनेकधा उपास्यत इति स्थितिः । परोवरीयस्त्वादिवद्भेददर्शनात् । स्माद्वीर्यसंभृत्यादीनां शांडिल्यविद्यादिष्वनुपसंहार इति ॥२३॥

## १३ पुरुषविद्याधिकरणम् । सू० २४ ।

### पुरु विद्यायामिव चे रेषा नाम्नानात् ॥२४॥

अस्ति तांडिनां पैंगिनां च रहस्यब्राह्मणे पुरुषविद्या । तत्र पुरुषो यज्ञः कल्पितः । तदीयमायुस्त्रेधा विभज्य सवनत्रयं कल्पितम् । अशिशिषादीनि च दीक्षादिभावेन कल्पितानि । अन्ये च धर्मास्तत्र समधिगता आशीर्मंत्रयोगादयः । तैत्तिरीयका अपि कंचित्पुरुषयज्ञं कल्पयन्ति— "तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी" इत्येतेनानुवाकेन । तत्र संशयः— किं य इतरत्रोक्ताः पुरुषयज्ञस्य धर्मास्ते तैत्तिरीयकेषूपसंहर्तव्याः, किंवा नोप हर्तव्या इति । पुरुषयज्ञत्वाविशेषादुप हारप्राप्तौ आचक्ष्महे— नोपहर्तव्या इति । कस्मात्? तद्रूपप्रत्यभिज्ञानाभावात् । तदाहाचार्यः पुरुषविद्यायामिवेति । यथैकेषां शाखिनां तांडिनां पैंगिनां च पुरुषविद्यायामाम्नानं, नैवमितरेषां तैत्तिरीयाणामाम्नानमस्ति । तेषां हीतरविलक्षणमेव यज्ञसंपादनं दृश्यते, पत्नीयजमानवेदवेदिबर्हिर्यूपाज्यपश्वृत्विगाद्यनुक्रमणात् । यदपि सवन पादनं तदपीतरविलक्षणमेव "यत्प्रातर्मध्यंदिनं सायं च तानि" इति । यदपि किंचिन्मरणावभृथत्वादि म्यं तदप्यल्पीयस्त्वात् भूयसा वैलक्षण्येनाभिभूयमानं न प्रत्यभिज्ञापन मम् । नच तैत्तिरीयके पुरुषस्य यज्ञत्वं श्रूयते । विदुषो यज्ञस्येति हि नचैते समानाधिकरणे षष्ठ्यौ विद्वानेव यो यज्ञस्तस्येति । नहि पुरुषस्य मुख्यं यज्ञत्वमस्ति । व्यधिकरणे त्वेते षष्ठ्यौ विदुषो यो यज्ञः येति । भवति हि पुरुषस्य मुख्यो यज्ञ बंधः । त्यां च गतौ मुख्य

एवार्थ आश्रयितव्यो न भाक्तः । 'आत्मा यजमानः' इति च यजमानत्वं पुरुषस्य निब्रुवन्वैयाधिकरण्येनैवास्य यज्ञ बंधं दर्शयति । अपिच 'तस्यैवंविदुषः' इति सिद्धवदनुवादश्रुतौ त्यां, पुरुषस्य यज्ञभावमात्मादीनां यजमानादिभावं प्रतिपित्समानस्य वाक्यभेदः स्यात् । अपिच संन्या ामात्मविद्यां पुरस्तादुपदिश्यानंतरं 'तस्यैवंविदुषः' इत्याद्यनुक्रमणं पश्यन्तः पूर्वशेष एवैष आम्नायो न स्वतंत्र इति प्रतीमः । तथाचैकमेव फलमुभयोरप्यनुवाकयोरुपलभामहे "ब्रह्मणो महिमानमाप्नोति" इति । इतरेषां त्वनन्यशेषः पुरुषविद्याम्नायः । आयुरभिवृद्धिफलो सौ ' ह षोडशं वर्षशतं जीवति य एवं वेद' इति समभिव्याहारात् । तस्माच्छाखान्तराधीतानां पुरुषविद्याध र्णां आशीर्मंत्रादीनामप्राप्तिः तैत्तिरीयके ॥२४॥

१४ वेधाद्यधिकरणम् । सू० २५ ।

वेधाद्यर्थभेदात् ॥२५॥

अस्त्याथर्वणिकानामुपनिषदारंभे मंत्रसमाम्नायः "सर्वं प्रविध्य हृदयं प्रविध्य धमनीः प्रवृज्य शिरोऽभिप्रवृज्य त्रिधा विपृक्तः" इत्यादिः । तांडिनाम्— "देव वितः प्रसुव यज्ञम्" इत्यादिः । शाट्यायनिना — "श्वेताश्वो हरितनीलोऽसि" इत्यादिः । कठानां तैत्तिरीयाणां च— ' नो मित्रः शं वरुणः' इत्यादिः । वाजसनेयिनां तूपनिषदारंभे प्रवर्ग्यब्राह्मणं पठ्यते— 'देवा ह वै त्रं निषेदुः' इत्यादि । कौषीतकिनामप्यग्निष्टोमब्राह्मणम्— "ब्रह्म वा अग्निष्टोमो ब्रह्मैव तदहर्ब्रह्मणैव ते ब्रह्मोपयन्ति तेऽमृतत्वमाप्नुवन्ति य एतदहरुपयन्ति" इति । किमिमे सर्वे प्रविध्यादयो मंत्राः प्रवर्ग्यादीनि च कर्माणि विद्यासूपसंह्रियेरन्किंवा नोपसंह्रियेरन्निति मीमांसामहे । किं तावन्नः प्रतिभाति? उपसंहार एवैषां विद्यास्विति । कुतः? विद्याप्रधानानां उपनिषद्ग्रंथानां समीपे पाठात् । नन्वेषां विद्यार्थतया विधानं नोपलभामहे । बाढम् । अनुपलभमाना अपि त्वनुमास्यामहे संनिधिसामर्थ्यात् । नहि संनिधेरर्थवत्त्वे संभवत्यकस्मादसावनाश्रयितुं युक्तः । ननु नैषां मंत्राणां विद्याविषयं किंचित्सामर्थ्यं पश्यामः । क च प्रवर्ग्यादीनि कर्माण्यन्यार्थत्वेनैव विनियुक्तानि सन्ति विद्यार्थत्वेनापि प्रतिपद्येमहीति । नैष दोषः । सामर्थ्यं तावन्मंत्राणां विद्याविषयमपि किंचिच्छक्यं कल्पयितुं हृद-

यादिसंकीर्तनात् । हृदयादीनि हि प्रायेणोपासनेष्वायतनादिभावेनोपदिष्टानि, तद्द्वारेण च "हृदयं प्रविध्य" इत्येवंजातीयकानां मंत्राणामुपपन्नमुपासनांगत्वम् । दृष्टश्चोपा नेष्वपि मंत्रविनियोगः 'भूः प्रपद्येऽसुनामुनामुना' इत्येवमादिः । था प्रवर्ग्यादीनां र्मणामन्यत्रापि विनियुक्तानां ामविरुद्धो विद्यासु विनियोगो वाजपेय इव बृहस्पतिसवस्येति । एवं प्राप्ते ब्रूमः— नैषामुपसंहारो विद्यास्विति । कस्मात्? वेधाद्यर्थभेदात् । "हृदयं प्रविध्य" इत्येवंजातीयकानां हि मंत्राणां ये र्था हृदयवेधादयो, भिन्ना अनभिसंबद्धास्त उपनिषदुदिताभिर्विद्याभिः । न तेषां ताभिः संगतुं ामर्थ्यमास्ति । ननु हृदयस्योपासनेष्वप्युपयोगात्तद्द्वारक उपासनासंबंध उपन्यस्तः । नेत्युच्यते । हृदयमात्र कीर्तनस्य ह्येवमुपयोगः थंचिदुत्प्रेक्ष्येत । नच हृदयमात्रमत्र मंत्रार्थः । "हृदयं प्रविध्य धमनीः प्रवृज्य" इत्येवंजातीयको हि न सकलो मंत्रार्थो विद्याभिरभिसंबध्यते । अभिचारिकविषयो ह्येषोऽर्थः । तस्मादाभिचारिकेण कर्मणा " र्वं प्रविध्य" इत्येतस्य मंत्रस्याभिसंबंधः । तथा "देव सवि ः प्रसुव यज्ञम्" इत्यस्य यज्ञप्रसवलिंगत्वाद्यज्ञेन कर्मणा अभिसंबंधः । तद्विशेषसंबंधस्तु प्रमाणान्तरादनुसर्तव्यः । एवमन्येषामपि मंत्राणां, केषांचिल्लिंगेन केषांचिद्वचनेन केषांचित्प्रमाणान्तरेण इत्येवमर्थान्तरेषु विनियुक्तानां रहस्यपठितानामपि तां न ंनिधिमात्रेण विद्याशेषत्वोपपत्तिः । दुर्बलो हि सांनिधिः श्रुत्यादिभ्य इत्युक्तं प्रथमे तंत्रे "श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्यानां मवाये पारदौर्बल्यमर्थविप्रकर्षात्" इत्यत्र । तथा कर्मणामपि प्रवर्ग्यादीनामन्यत्र विनियुक्तानां न विद्याशेषत्वोपपत्तिः । नह्येषां विद्याभिः सहैकार्थ्यं किंचिदस्ति । वाजपेये तु बृहस्पतिसवस्य स्पष्टं विनियोगान्तरम्— " ाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत" इति । अपिचैकोऽयं प्रवर्ग्यः सकृदुत्पन्नो बलीयसा प्रमाणेनान्यत्र विनियुक्तो न दुर्ब ेन प्रमाणेनान्यत्रापि विनियोगमर्हति । अगृह्यमाणविशेषत्वे हि प्रमाणयोरेतदेवं स्यान्नतु बलवदबलोः प्रमाणयोरगृ माणविशे ा ंभवति, बलवदबलवत्त्वविशेषादेव । मादेवंजातीयकानां मंत्राणां कर्मणां वा न ंनिधिपाठमात्रेण विद्याशेषत्वं आशांकितव्यम् । अरण्यानुवचनादिधर्मसामान्यात्तु सांनिधिपाठ इति संतोष्टव्यम् ॥२५॥

५ ान्यधिकरणम् । सू० २६ ।

हानौ तूपायनशब्दशेषत्वात्कु दस्तुत्पगानवत्तदुक्तम् ॥२ ॥

अस्ति तांडिनां श्रुतिः 'अश्व इव रोमाणि विधूय पापं चंद्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि' इति । था र्वणिकाना ' । विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' इति । तथा शाट्यायनिनः पठन्ति "तस्य पुत्रा दायमुपयन्ति सुहृदः ाधुकृत्यां द्विषन्तः पापकृत्याम्" इति । तथैव ौषीतकिनः "तत्सुकृतदुष्कृते विधूनुते तस्य प्रिया ज्ञातयः सुकृतमुपयन्त्यप्रिया दुष्कृतम्" इति । तदिह क्वचित्सुकृतदुष्कृतयोर्हानं श्रूयते । क्वचित्तयोरेव विभागेन प्रियैरप्रियैश्चोपायनम् । क्वचित्तूभयमपि हानमुपायनं च । तद्यत्रोभयं श्रूयते तत्र ताव किंचिद्वक्तव्यमस्ति । यत्राप्युपायनमेव श्रूयते न हानं, तत्राप्यर्थादेव हा संनिपतति । अन्यैरात्मीययोः सुकृतदुष्कृतयोरुपेयमानयोः आ श्यकत्वाच्च द्धानस्य । यत्र तु हानमेव श्रूयते नोपायनं, तत्रोपायनं निपतेद्वा न वेति विचिकित्सायां अश्रवणाद निपातः । विद्यान्तरगोचरत्वाच्च शाखान्तरीयस्य श्रवणस्य । अपिचात्मकर्तृकं सुकृतदुष्कृ योर्हानं, परकर्तृकं तूपायनम् । तयोः अ त्यावश्यकभावे कथं हानेनोपायनमाक्षिप्येत ? तस्मादसंनिपातो हानौ उपायनस्येति ॥

अस्यां प्राप्तौ पठति— हानौ त्विति । हानौ त्वेतस्यां केवलायामपि श्रूयमाणायामुपायनं संनिपतितुमर्हति । तच्छेषत्वात् । हानशब्दशेषो ुपायनशब्दः समधिगतः कौषीतकिरहस्ये । तस्मादन्यत्र केवलहानशब्दश्रवणेऽप्युपायनानुवृत्तिः । यदुक्तं अश्रवणाद्विद्यान्तरगोचरत्वादनावश्यकत्वाच्चासंनिपात इति, तदुच्यते । भवेदेषा व्यवस्थोक्तिः, यद्यनुष्ठेयं किंचिदन्यत्र ुतमन्यत्र निनीष्येत । नत्विह हानमुपायनं वा अनुष्ठेयत्वेन संकीर्त्यते । विद्यास्तुत्यर्थं त्वनयोः कीर्तनम् । इत्थं महाभागा विद्या यत ामर्थ्यादस्य विदुषः सुकृतदुष्कृते संसारकारणभूते विधूयेते, ते चास्य सुहृद्द्विषत्सु निविशेते इति । स्तुत्यर्थे चास्मिन्संकीर्तने हानानं रभावित्वेनोपायनस्य, क्वचित् श्रुतत्वादन्यत्रापि हानश्रुतावुपायनानुवृत्तिं मन्यते स्तुतिप्रकर्ष ाय । प्रसिद्धा चार्थवादान्तरापेक्षार्थवादान्तरप्रवृत्तिः— 'एकविंशो वा इतोऽ ावादित्यः'

इत्येवमादिषु । कथं हीहैकविंशता आदित्यस्याभिधीयेत, अनपेक्ष्यमाणेऽर्थ-वादान्तरे 'द्वादश मा ाः पंच वस्त्रय इमे लोका अ ावादित्य एकविंशः' इत्येतस्मि न्न्। तथा 'त्रिष्टुभौ भवतः सेन्द्रियत्वाय' इत्येवमादिवादेषु 'इंद्रियं वै त्रिष्टुप्' इत्येवमाद्यर्थवादान्तरापेक्षा दृश्यते । विद्यास्तुत्यर्थत्वाच्च अस्योपायनवादस्य, कथमन्यदीये सुकृतदुष्कृते अन्यैरुपेयेते इति नातीवाभिनिवेष्टव्यम् । उपायनशब्दशेषत्वादिति तु शब्दशब्दं समुच्चारयन्स्तुत्यर्थामेव हानावुपायनानुवृत्तिं सूचयति । गुणोप ंहारविवक्षायां हि उपायनार्थस्यैव हानानुवृत्तिं ब्रूयात् । तस्मात् गुणोपसंहारविचारप्रसंगेन स्तुत्युप ंहारप्रदर्शनार्थमिदं सूत्रम् । कुशाच्छंदस्तुत्युपगानवदित्युपमोपादानम् । तद्यथा भाल्लविनाम्— 'कुशा वानस्पत्याः स्थ ता मा पात' इत्येतस्मिन्निगमे कु ानां अविशेषेण .नस्पतियोनित्वेन श्रवणे, शाट्यायानिनां औदुंबराः कुशा इति विशेषवचनादौदुंबर्याः कुशा आश्रीयन्ते । यथाच क्वचिद्देवासुरच्छंदसामविशेषेण पौर्वापर्यप्रसंगे 'देवच्छंदांसि पूर्वाणि' इति पैंग्याम्नानात्प्रतीयन्ते । यथाच षोडशिस्तोत्रे केषांचित्कालाविशेषप्राप्तौ 'समयाध्युषिते सूर्ये' इत्यार्चश्रुतेः कालविशेषप्रतिपत्तिः । यथैव चाविशेषेणोपगानं केचित्समामनन्ति विशेषेण भाल्लविनः । यथैतेषु कुशादिषु श्रुत्यंतरगतविशेषान्वयः, एवं हानावप्युपायनान्वय इत्यर्थः । श्रुत्यंतरकृतं हि विशेषं श्रुत्यंतरेऽनभ्युपगच्छतः सर्वत्रैव विकल्पः स्यात् । स चान्याय्यः सत्यां गतौ । तदुक्तं द्वादशलक्षण्याम्— "अपि तु वाक्यशेषत्वादितरपर्युदासः स्यात्प्रतिषेधे विकल्पः स्यात्" इति ॥

अथवा एतास्वेव विधूननश्रुतिष्वेतेन सूत्रेणैतच्चिंतयितव्यम् । किमनेन विधूननवचनेन सुकृतदुष्कृतयोर्हानमभिधीयते, किंवाऽर्थान्तरमिति । तत्र चैवं प्रापयितव्यम् । न हानं विधूननमभिधीयते "धूञ् कंपने" इति स्मरणात् । "दोधूयन्ते ध्वजाग्राणि" इति च वायुना चाल्यमानेषु ध्वजाग्रेषु प्रयोगदर्शनात् । तस्माच्चालनं विधूननमभिधीयते । चालनं तु सुकृतदुष्कृतयोः कंचित्कालं फलप्रतिबंधनादित्येवं प्रापय्य प्रतिवक्तव्यम् । हानावेवैष विधूननशब्दो वर्तितुमर्हति । उपायनशब्दशेषत्वात् । नहि परपरिग्रहभूतयोः सुकृतदुष्कृतयोरप्रहीणयोः परैरुपायनं संभवति । यद्यपीदं परकीययोः सुकृत-

दुष्कृतयोः परैरुपायनं नां भाव्यते, त ापि कीर्तनात्तावत्तदानु - ण्येन हानमेव विधूननं नामेति निर्णे शक्यते। क्वचिदपि चेदं विधूनन - नि ावुपायनं श्रूयमाणं कुशाछंदस्तुत्युपगानवद्विधूननश्रुत्या सर्वत्रापेक्षमाणं सार्वत्रिकं नि र्णयकारणं संपद्यते। नच चालनं ध्वजाग्रवत्सुकृतदुष्कृतयोर्मुख्यं भवति। अद्रव्यत्वात्। अश्वश्च रो ाणि विधून्वानस्त्यजन्रजः सहै तेन रोमाण्यपि जीर्णानि शातयति "अश्व इव रोमाणि विधूय पाप " इति च ब्राह्मणम्। अनेकार्थत्वाभ्युपगमाच्च धातूनां न स्मरणविरोधः। तदुक्तामिति व्याख्या म् ॥२६॥

१६ ांपरायाि रणम्। सू० २ –२८।

## ांपराये तर्तव्याभावात्तथा न्ये ॥२७॥

देवयानेन पथा पर्यंकस्थं ब्रह्माभिप्रस्थितस्य व्यध्वनि सुकृतदुष्कृतयोः वियोगं कौषीतकिनः पर्यंकविद्याया ामनन्ति "स एतं देवयानं पंथानमा ा-द्याग्निलोकमागच्छति" इत्युपक्रम्य "स आगच्छति विरजां नदीं ां मनसै-वात्येति तत्सुकृतदुष्कृते विधूनुते" इति। तत्किं यथाश्रुतं व्यध्वन्येव वियोग-वचनं प्रतिपत्तव्यं, आहोस्विदादावेव देहादपसर्पणे, इति विचारणायां श्रुति-प्रामाण्याद्यथाश्रुति प्रि पत्तिप्रसक्तौ पठति— ांपराय इति। सांपराये गमन एव देहादपसर्पणे इदं विद्यासामर्थ्यात्सुकृतदुष्कृतहानं भवतीति प्रतिजानीते। हेतुं चाचष्टे तर्तव्याभावादिति। नहि विदुषः संपरेतस्य विद्यया ब्रह्म प्रे-प्सतोऽन्तराले सुकृतदुष्कृताभ्यां किंचित्प्राप्तव्यमस्ति यदर्थं कतिचित्क्षणान-क्षीणे ते कल्पेयाताम्। विद्याविरुद्धफलत्वात्तु विद्या ामर्थ्येन योः क्षयः। च यदैव विद्या फलाभिमुखी तदैव भवितुमर्हति। तस्मात्प्रागेव सन्नयं सुकृतदुष्कृतक्षयः पश्चात्पठ्यते। तथा ह्यन्येऽपि शााखिनस्तांडिनः शाट्याय-ानिनश्च प्रागवस्थायामेव सुकृतदुष्कृतहानमामनन्ति 'अश्व इव रोमाणि विधूय पापम्' इति, ' स्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति च ॥२७॥

## दत भयाविरोधात् ॥२८॥

यदि च देहादपसृतस्य देवयानेन पथा प्रस्थितस्यार्धपथे सुकृतदुष्कृ-तक्षयोऽभ्युपगम्येत, ः पतिते देहे यमनियमविद्याभ्या ात्मकस्य सुकृतदु-

ष तक्षयहेतोः रुषप्रयत्नस्येच्छातोऽनु ानानुपपत्तेः अनुपपत्तिरे तद्धेतुकस्य सुकृतदुष्कृ क्षयस्य स्यात् । तस्मात्पूर्वमेव सा कावस्थायां छंदतोऽनुष्ठा तस्य स्यात् । तत्पूर्वकं च सुकृतदुष्कृतहानमिति द्रष्टव्यम् । एवं निमित्तनैमित्तिकयोरुपपत्तिः तांडिशाट्यायनिश्रुत्योश्च संगतिरिति ॥२८॥

### गतेरर्थवत्त्वाधिकरण_ । सू० २९–३० ।

**गतेरर्थ त्वमुभयथाऽन्यथा हि विरो : ॥२९॥**

क्वचित्पुण्यपापहा संनिधौ देवयानः पंथाः श्रूयते, क्वचिन्न । तत्र संशयः किं ानावविशेषेणैव देवयानः पंथाः संनिपतेदुत विभागेन ाचित्संनिपतेत् क्वचिन्नेति । यथा तावद्धानावविशेषेणैव उपायनानुवृत्तिरुक्ते देवयानानुवृत्तिरपि भवितुमर्हतीत्यस्यां प्राप्तौ आचक्ष्महे । गतेर्देवयानस्य पथोऽर्थवत्त्वमुभयथा विभागेन भवितुमर्हति, क्वचिदर्थवती गतिः क्वचिन्नेति। नाविशेषेण । अन्यथा ह्यविशेषेणैवै स्यां गतावंगीक्रियमाणायां विरोधः स्यात् । 'पुण्यपापे विधूय निरंजनः परमं ाम्यमुपैति' इत्यस्यां श्रुतौ देशान्तरप्रापणी गतिर्विरुध्येत । कथं हि निरंजनोऽगन्ता देशान्तरं गच्छेत् । गंतव्यं च परमं साम्यं न देशान्तरप्राप्त्यायत्तं, इति आनर्थक्यमेवात्र गतेर्मन्यामहे ॥२९॥

**उपपन्नस् क्षणार्थोपलब्धेर्लोकवत् ॥३०॥**

उपपन्नश्चायमुभयथाभावः क्वचिदर्थवती गतिः क्वचिन्नेति । तल्लक्ष- ार्थोपलब्धेः । गतिकारणभूतो ह्यर्थः पर्यंकविद्यादिषु सगुणेषूपासनेषूपलभ्यते । यत्र हि पर्यंकारोहणं पर्यंकस्थेन ब्रह्मणा संवदनं, विशिष्टगंधादिप्राप्तिश्च, इत्येवमादि बहु देशान्तरप्राप्त्यायत्तं फलं श्रूयते । तत्रार्थवती गतिः । नहि सम्यग्दर्शने तल्लक्षणार्थोपलब्धिरस्ति । न ात्मैकत्वदर्शिनां आप्तकामानां इहैव दग्धाशेषक्लेशबीजानां आरब्धभोगकर्माशयक्षपणव्यतिरेकेण अपेक्षितव्यं किंचिदस्ति । तत्रानर्थिका गतिः । लोकवच्चैष विभागो द्रष्टव्यो, यथा लोके ग्रामप्राप्तौ देशान्तरप्रापणः पंथा अपेक्ष्यते, नारोग्यप्राप्तौ, एवमिहापीति । भूयश्चैनं विभागं चतुर्थाध्याये निपुणतरमुपपादयिष्यामः ॥३०॥

### १८ अनियमाधिकरणम् । सू० ३ ।

**अनिय : सर्वासामविरोधः शब्दानुमानाभ्याम् ॥३ ॥**

सगुणा विद्यासु गतिरर्थवती, न निर्गुणायां परमात्मविद्यायां, इत्युक्तम्। सगुणा पि विद्यासु कासुचिद्गतिः श्रूयते यथा पर्यंकविद्यायामुपकोसलविद्यायां पंचाग्निविद्यायां दहरविद्यायामिति। नान्यासु यथा मधुविद्यायां शांडिल्यविद्यायां षोडशकलविद्यायां वैश्वानरविद्यायामिति। तत्र शयः— किं यास्वेवैषा गतिः श्रूयते तास्वेव नियम्येत, उतानियमेन सर्वाभिरेवैवंजातीयकाभिर्विद्याभिरभिसं ध्येतेति। किं तावत्प्राप्तं? नियम इति। यत्रैव श्रूयते तत्रैव भवितुमर्हति। प्रकरणस्य नियामकत्वात्। यद्यन्यत्र अश्रूयमाणापि गतिर्विद्यान्तरं गच्छेत् श्रुत्यादीनां प्रामाण्यं हीयेत, सर्वस्य र्वार्थत्वप्रसंगात्। अपिचार्चिरादिकैकैव गतिरुपकोसलविद्यायां पंचाग्निविद्यायां च तुल्यवत्पठ्यते। त र्वार्थत्वेऽनर्थकं पुनर्वचनं स्यात्। तस्मान्नियम इत्येवं प्राप्ते पठति— अनियम इति। सर्वा मिवाभ्युदयप्राप्तिफलानां गुणानां विद्यानामविशेषेणैषा देवयानाख्या गतिर्भवितुमर्हति। नन्वनियमाभ्युपगमे प्रकरणविरोध उक्तः। नैषोऽस्ति विरोधः, शब्दानुमानाभ्यां श्रुतिस्मृतिभ्यां इत्यर्थः। तथाहि श्रुतिः— 'तद्य इत्थं विदुः' इति पंचाग्निविद्यावतां देवयानं पंथानमवतारयन्ती 'ये चेमेऽरण्ये श्रद्धातप इत्युपासते' इति विद्यान्तरशीलिनामपि पंचाग्निविद्याविद्भिः समानमार्गतां गमयति। कथं पुनरवगम्यते विद्यान्तरशीलिनामियं गतिरिति? ननु श्रद्धातपःपरायणानामेव स्यात्तन्मात्रश्रवणात्। नैष दोषः। नहि केवलाभ्यां श्रद्धातपोभ्यां अंतरेण विद्याबलं एषा गतिर्लभ्यते "विद्यया तदारोहन्ति यत्र कामाः परागताः। न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः" इति श्रुत्यंतरात्। तस्मादिह श्रद्धातपोभ्यां विद्यान्तरोपलक्षणम्। वाजसनेयिनस्तु पंचाग्निविद्याधिकारेऽधीयते— 'य एवमेतद्विदुर्ये चामी अरण्ये श्रद्धां सत्यमुपासते' इति। तत्र श्रद्धालवो ये सत्यं ब्रह्मोपासत इति व्याख्येयम्। त्यशब्दस्य ब्रह्मण्यसकृत्प्रयुक्तत्वा । पंचाग्निविद्याविदां चेत्थंवित्तयैव उपात्तत्वाद्विद्यान्तरपरायणानामेवैतदुपादानं न्याय्यम्। 'अथ य एतौ पंथानौ न विदुस्ते कीटाः पतंगा यदिदं दंदशूकम्' इति च मार्गद्वयभ्रष्टानां कष्टामधोगतिं गमयन्ती श्रुतिर्देवयानपितृयाणयोरेव एनानंतर्भावयति। तत्रापि विद्याविशेषादेषां देवयानप्रतिपत्तिः। स्मृतिरपि— "शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते। एकया यात्यना-

वृत्तिमन्ययाऽऽवर्तते पुनः" इति । यत्पुनर्देवयानस्य पथो द्विराम्नानं उपकोसलविद्यायां पंचाग्निविद्यायां च, दुभयत्राप्यनुचिंतनार्थम् । स्मादनियमः ॥३१॥

१९ विदधिकाराधि रणम् । सू० ३२ ।

यावदधिकारमवस्थितिराधिकारिकाणा ॥३२॥

विदुषो वर्तमानदेहपातानंतरं देहान्तरमुत्पद्यते वेति चिंत्यते । ननु विद्यायाः साधनभूतायाः पत्तौ कैवल्यनिर्वृत्तिः स्यान्न वेति । नेयं चिंतोपपद्यते । नहि पाकसाधन पत्तौ ओदनो भवेन्न वेति चिंता भवति । नापि भुंजानस्तृप्येन्न वेति चिंत्यते । उपपन्ना त्वियं चिंता ब्रह्मविदामपि केषांचिदितिहासपुराणयोः देहांतरोत्पत्तिदर्शनात् । तथाह्यपांतरतमा नाम वेदाचार्यः पुराणर्षिः विष्णुनियोगात्कालिद्वापरयोः धौ कृष्णद्वैपायनः संबभूवेति स्मरन्ति । वासिष्ठश्च ब्रह्मणो मानसः पुत्रः न्निमिशापादपगतपूर्वदेहः पुनर्ब्रह्मादेशान्मित्रावरुणाभ्यां संबभूवेति । भृग्वादीनामपि ब्रह्मण एव मानसपुत्राणां वारुणे यज्ञे पुनरुत्पत्तिः श्रूयते । सनत्कुमारोऽपि ब्रह्मण एव मानसः पुत्रः स्वयं रुद्राय वरप्रदानात्स्कंदत्वेन प्रादुर्बभूव । एवमेव दक्षनारदप्रभृतीनां भूयसी देहान्तरोत्पत्तिः कथ्यते ते तेन निमित्तेन स्मृतौ । श्रुतावपि मंत्रार्थवादयोः प्रायेणोपलभ्यते । ते च केचित्पतिते पूर्वदेहे देहान्तरमाददते, केचित्तु स्थित एव तस्मिन्योगैश्वर्यवशादनेकदेहादानन्यायेन । सर्वे चैते समधिगतसकलवेदार्थाः स्मर्यन्ते । तदेतेषां देहान्तरोत्पत्तिद नात्प्राप्तं ब्रह्मविद्यायाः पाक्षिकं मोक्षहेतुत्वं अहेतुत्वं वेति ॥

अत उत्तरमुच्यते । न । तेषामपान्तरतमप्रभृतीनां वेदप्रवर्तनादिषु लोकास्थि हेतुष्वाधिकारेषु नियुक्तानामाधिकारतंत्रत्वात्स्थितेः । तथासौ भगवान्सविता सहस्रयुगपर्यंतं जगतोऽधिकारं चरित्वा तदवसाने उदयास्तमयवर्जितं कैवल्यमनुभवति 'अथ तत ऊर्ध्व उदेत्य नैवोदेता नास्तमेतैकल एव मध्ये स्थाता' इति श्रुतेः । यथाच वर्तमाना ब्रह्मविदः आरब्धभोगक्षये कैवल्यमनुभवन्ति । 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' इति श्रुतेः । एवमपान्तरतमप्रभृतयोऽपीश्वराः परमेश्वरेण तेषु तेष्वधिकारेषु नियुक्ताः सन्तः सत्यपि सम्यग्दर्शने कैवल्यहेतौ अक्षीणकर्माणो यावदधि-

ारमवतिष्ठन्ते, तदवसाने चापवृज्यन्ते इत्यविरुद्धम् । सकृत्प्रवृत्तमेव हि ते फलदानाय कर्मा यमातिवा यन्तः स्वातंत्र्येणैव गृहादिव गृहान्तरमन्यमन्यं देहं संचरन्तः स्वाधिकारनिर्वर्तनाय अपरिमुषितस्मृतय एव देहेन्द्रियप्रकृतिवशित्वान्निर्माय देहान्युगपत्क्रमेण वा अधितिष्ठन्ति। नचैते जातिस्मरा इत्युच्यन्ते "त एवैते" इति स्मृतिप्रसिद्धेः। यथाहि सुलभा नाम ब्रह्मवादिनी जनकेन विवदितुकामा व्युदस्य स्वं देहं जानकं देहमाविश्य, व्युद्य तेन, पश्चात्स्वमेव देहमाविवेशेति स्मर्यते। यदि ह्युपयुक्ते सकृत्प्रवृत्ते कर्माणि कर्मान्तरं देहान्तरारंभकारण ाविर्भवेत्ततोऽन्यदप्यदग्धबीजं कर्मान्तरं तद्वदेव प्रसज्येतेति ब्रह्मविद्यायाः पाक्षिकं मोक्षहेतुत्वमहेतुत्वं वाशंक्येत। नत्वियमाशंका युक्ता, ज्ञानात्कर्मबीजदाहस्य श्रुतिस्मृतिप्रसिद्धत्वात्। तथाहि श्रुतिः—'भिद्यते हृदयग्रंथिश्छिद्यन्ते र्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' इति। 'स्मृतिलंभे सर्वग्रंथीनां विप्रमोक्षः' इति चैवमाद्या। स्मृतिरपि— "यथैधांसि सामिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन। ज्ञानाग्निः र्वकर्माणि भस्म ात्कुरुते तथा" "बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः। ज्ञानदग्धैस्तथा क्लेशैर्नात्मा संपद्यते पुनः" इति चैवमाद्या। नचाविद्यादिक्लेशदाहे सति क्लेशबीजस्य कर्माशयस्यैकदेशदाहः एकदेशप्ररोहश्चेत्युपपद्यते। नह्यग्निदग्धस्य शालिबीजस्यैकदेशप्ररोहो दृश्यते। प्रवृत्तफलस्य तु कर्माशयस्य मुक्तेषोरिव वेगक्षयान्निवृत्तिः। 'तस्य तावदेव चिरम्' इति शरीरपातावधिक्षेपकरणात्। तस्मादुपपन्ना यावदधिकारं आधिकारिकाणामवस्थितिः। नच ज्ञानफलस्यानैकान्तिकता। तथाच श्रुतिरविशेषेणैव सर्वेषां ज्ञानान्मोक्षं दर्शयति 'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम्' इति। ज्ञानान्तरेषु च ऐश्वर्यादिफलेष्वासक्ताः स्युर्महर्षयः। ते पश्चादैश्वर्यक्षयदर्शनेन निर्विण्णाः परमात्मज्ञाने परिनिष्ठाय कैवल्यं प्रापुरित्युपपद्यते। "ब्रह्मणा सह ते सर्वे प्राप्ते प्रतिसंचरे। परस्यान्ते कृतात्मानः प्रविन्ति परं पदम्" इति स्मरणात्। प्रत्यक्षफलत्वाच्च ज्ञानस्य फलविरहाशंकानुपपत्तिः। कर्मफले हि स्वर्गादौ अनुभवानारूढे स्यादाशंका भवेद्वा न वेति। अनुभवारूढं तु ज्ञानफलम् 'यत ाक्षादपरोक्षाद्ब्रह्म' इति श्रुतेः। 'तत्त्वमसि' इति च सिद्धवदुपदेशात्। नहि 'तत्त्वमसि' इत्यस्य वाक्य

र्थः तत्त्वं मृतो भविष्यसीत्येवं परिणेतुं शक्यः । ' द्वैतत्पश्यन्नृषि िमदेवः तिपेदेऽहं मनुरभवं सूर्यश्च' इति च म्यग्दर्शनकालमेव तत्फ सर्वात्मत्वं दर्शयति । तस्मादैकान्ि की विदुषः कैवल्य ि द्धिः ॥३२॥

२० अक्षरध्यधिकरणम् । सू० ३३ ।

अक्षर ि ं त्ववरोधः ान्यतद्भावाभ्यामौ सदवत्तदुक्तम् ॥३३॥

वाज नेयके श्रूयते— 'ए द्वै दक्षरं गार्गि ब्राह्मणा अभिवदन्त्य-थूलमनण्वह्रस्व दीर्घमलोहितमस्नेहम्' इत्यादि । तथा आथर्वणे श्रूयते— 'अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रम र्णम्' इत्यादि । तथैवान्यत्रापि विशेषनिराकरणद्वारेणाक्षरं परं ब्रह्म श्राव्यते । तत्र च क्वचित्केचिदतिरिक्ता विशेषाः प्रतिषिध्यन्ते । तासां विशेषप्रतिषेधबुद्धीनां किं सर्वासां सर्वत्र प्राप्तिः उत व्यवस्थेति संशये श्रुतिविभागाद्व्यवस्थाप्राप्तौ उच्यते— अक्षरविषयास्तु विशेषप्रतिषेधबुद्धयः सर्वाः सर्वत्रावरोद्धव्याः ामान्यतद्भावाभ्याम्— समानो हि सर्वत्र विशेषनिराकरणरूपो ब्रह्मप्रतिपादनप्रकारः । तदेव च र्वत्र प्रतिपाद्यं ब्र अभिन्नं प्रत्यभिज्ञायते । तत्र किमित्यन्यत्र कृता बुद्धयोऽन्यत्र न स्युः । तथाच 'आनंदादयः प्रधानस्य' [३.३.११] इत्यत्र व्याख्यातम् । तत्र विधिरूपाणि विशेषणानि चिंतितानि, इह प्रतिषेधरूपाणीति विशेषः । प्रपंचार्थश्चायं चिंताभेदः । औपसदवदिति निदर्शनम् । यथा जामदग्न्येऽहीने पुरोडाशिनीषूपसत्सु चोदितासु, पुरोडाशप्रदानमंत्राणाम् 'अग्नेर्वेहोत्रं वेरध्वरम्' इत्येवमादीनामुद्गातृवेदोत्पन्नानामपि अध्वर्युभिरभिसंबंधो भवति, अध्वर्युकर्तृकत्वात्पुरोडाशप्रदानस्य, प्रधानतंत्रत्वाच्चांगानाम्, एवमिहाप्यक्षरतंत्रत्वात्तद्विशेषणानां यत्र क्वचिदप्युत्पन्नानामक्षरेण सर्वत्राभिसंबंध इत्यर्थः । तदुक्तं प्रथमे कांडे— "गुण ख्यव्यतिक्रमे दर्थत्वान्मुख्ये वेदसंयोगः" इत्यत्र ॥३३॥

२ इयदधिकरणम् । सू ३४ ।

इयदामननात् ॥३४॥

' सुपर्णा सयुजा खाया मानं वृ परिषस्वजा । योरन्यः पिप्प स्वाद्वत्त्यनश्नन्न्यो अभिचाकशीति' इत्यध्यात्माधिकारे मंत्रमाथर्वणिकाः श्वेताश्वतरा पठन्ति । कठाः ' पिबन्तौ सुकृतस्य लोके

गुहां प्रविष्टौ परमे परार्धे । छायातपौ ब्रह्मविदो वदन्ति पंचाग्नयो ये च त्रिणाचिकेताः' इति । किमत्र विद्यैकत्वं, उत विद्यानानात्वमिति संशयः । किं तावत्प्राप्तं ? विद्यानानात्वमिति । कुतः ? विशेषदर्शनात् । द्वा सुपर्णेत्यत्र ह्येकस्य भोक्तृत्वं दृश्यते, एकस्य चाभोक्तृत्वं दृश्यते । ऋतं पिबन्तावित्यत्रोभयोरपि भोक्तृत्वमेव दृश्यते । तद्वेद्यरूपं भिद्यमानं विद्यां भिंद्यादित्येवं प्राप्ते ब्रवीति विद्यैकत्वमिति । कुतः ? यतः उभयोरप्यनयोर्मंत्रयोरियत्तापरिच्छिन्नं द्वित्वोपेतं वेद्यं रूपमभिन्नमामनान्ति । ननु दर्शितो रूपभेदः । नेत्युच्यते । उभावप्येतौ मंत्रौ जीवद्वितीयमीश्वरं प्रतिपादयतो, नार्थान्तरम् । 'द्वा सुपर्णा' इत्यत्र तावत् 'अनश्नन्नन्यो अभिचाकशीति' इत्यशनायाद्यतीतः परमात्मा प्रतिपाद्यते । वाक्यशेषेऽपि च स एव प्रतिपाद्यमानो दृश्यते । "जुष्टं यदा पश्यत्यन्यमी मस्य महिमानम्" इति । 'ऋतं पिबन्तौ' इत्यत्र तु जीवे पिबति अशनायाद्यतीतः परमात्मापि साहचर्याच्छत्रिन्यायेन पिबतीत्युपचर्यते। परमात्मप्रकरणं ह्येतत् 'अन्यत्र धर्मादन्यत्राधर्मात्' इत्युपक्रमात् । तद्विषय एव चात्रापि वाक्यशेषो भवति 'यः सेतुरीजानानामक्षरं ब्रह्म यत्परम्' इति। 'गुहां प्रविष्टावात्मानौ हि' [१.२.११] इत्यत्र चैतत्प्रपंचितम् । तस्मान्नास्ति वेद्यभेदः । तस्माच्च विद्यैकत्वम् । अपिच त्रिष्वप्येतेषु वेदान्तेषु पौर्वापर्यालोचने परमात्मविद्यैवावगम्यते । तादात्म्यविवक्षयैव जीवोपादानं नार्थान्तरविवक्षया । नच परमात्मविद्यायां भेदाभेदविचारावतारोऽस्तीत्युक्तम्। तस्मात्प्रपंचार्थ एवैष योगः । तस्माच्चाधिकधर्मोप हार इति ॥३४॥

## २२ अंतरत्वाधिकरणम् । सू० ३५–३६ ।

### अंतरा भूतग्रामवत्स्वात्मनः ॥३५॥

'यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः' इत्येवं द्विरुषस्तकहोलप्रश्नयोर्नैरंतर्येण वाजसनेयिनः समामनन्ति । तत्र संशयः— विद्यैकत्वं वा स्याद्विद्यानानात्वं वेति । विद्यानानात्वमिति तावत्प्राप्तम् । अभ्याससामर्थ्यात् । अन्यथा ह्यन्यूनानतिरिक्तार्थे द्विराम्नानमन र्थकमेव स्यात् । तस्माद्यथाभ्यासात्कर्मभेदः, एवमभ्यासाद्विद्याभेदः । इत्येवं प्राप्ते प्रत्याह— अंतरा आम्नानाविशेषात्स्वात्मनो विद्यैकत्वमिति । सर्वान्तरो हि स्वात्मा उभयत्राप्यविशिष्टः पृच्छ्यते च, प्रत्युच्यते च । नहि द्वावात्मानौ एकस्मिन्देहे न्तरौ

संभवतः । तदा ह्येकस्यांजसं सर्वान्तरत्वमवकल्प्येत । एकस्य तु भूतग्रामवन्नैव सर्वांतरत्वं स्यात् । यथाच पंचभूतसमूहे देहे, पृथिव्या आपोऽन्तरा अद्भ्यस्तेजोऽन्तरमिति सत्यप्यापेक्षिकेऽन्तरत्वे, नैव मुख्यं सर्वान्तरत्वं भवति, थेहापीत्यर्थः । अथवा भूतग्रामवदिति श्रुत्यंतरं निदर्शयति । यथा— "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा" इत्यस्मिन्मंत्रे मस्तेषु भूतग्रामेष्वेक एव सर्वान्तर आत्माम्नायते । एवमनयोरपि ब्राह्मणयोरित्यर्थः । तस्माद्वेद्यैक्यात् विद्यैकत्वमिति ॥३५॥

अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् ॥३६॥

अथ यदुक्तं अनभ्युपगम्यमाने विद्याभेदे आम्नानभेदानुपपत्तिरिति, तत्परिहर्तव्यम् । अत्रोच्यते— नायं दोषः । उपदेशान्तरवदुपपत्तेः । यथा तांडिनामुपनिषदि षष्ठे प्रपाठके— 'स आत्मा तत्त्वमसि श्वेतकेतो' इति नवकृत्वोऽप्युपदेशे न विद्याभेदो भवति, एवमिहापि भविष्यति । कथं च नवकृत्वोऽप्युपदेशे विद्याभेदो न भवति? उपक्रमोपसंहाराभ्यां एकार्थतावगमात् । 'भूय एव मा भगवान्विज्ञापयतु' इति चैकस्यैवार्थस्य पुनः पुनः प्रतिपिपादयिषितव्यत्वेनोपक्षेपात् । आशंकान्तरनिराकरणेन च असकृदुपदेशोपपत्तेः । एवमिहापि प्रश्नरूपाभेदात् 'अतोऽन्यदार्तम्' इति च परिसमाप्त्यविशेषादुपक्रमोपसंहारौ तावदेकार्थविषयौ दृश्येते । 'यदेव साक्षादपरोक्षाद्ब्रह्म' इति द्वितीये प्रश्ने एवकारं प्रयुंजानः पूर्वप्रश्नगतमेवार्थं उत्तरत्र अनुकृष्यमाणं दर्शयति । पूर्वस्मिंश्च ब्राह्मणे कार्यकरणव्यतिरिक्तस्यात्मनः सद्भावः कथ्यते । उत्तरस्मिंस्तु तस्यैव अशनायादिसंसारधर्मातीतत्वं कथ्यते। इत्येकार्थतोपपत्तिः । तस्मादेका विद्येति ॥३६॥

२३ व्यतिहाराधिकरणम् । सू० ३७ ।

व्यतिहारो विशिंषन्ति हीतरवत् ॥३७॥

तथा— 'तद्योऽहं सोऽसौ योऽसौ सोऽहम्' इत्यादित्यपुरुषं प्रकृत्य ऐतरेयिणः समामनन्ति, तथा जाबालाः "त्वं वा अहमस्मि भगवो देवतेऽहं वै त्वमसि" इति । तत्र संशयः किमिह व्यतिहारेणोभयरूपा मतिः कर्तव्या, उत एकरूपैवेति। एकरूपैवेति तावत्प्राह । नह्यत्रात्मनः ईश्वरेणैकत्वं मुक्त्वा अन्यत्किंचिच्चिंतायितव्यमस्ति । यदि चैवं चिंतायितव्यो विशेषः परिकल्प्येत,

संसारिणश्चेश्वरात्मत्वं ईश्वरस्य संसार्यात्मत्वामिति। तत्र संसारिणस्तावदीश्वरात्मत्वे उत्कर्षो भवेत्, ईश्वरस्य तु संसार्यात्मत्वे निकर्षः कृतः स्यात्। तस्मादैकरूप्यमेव मतेः। व्यतिहाराम्नायस्त्वेकत्वदृढीकारार्थं इति। एवं प्राप्ते प्रत्याह— व्यतिहारोऽयमाध्यानायाम्नायते, इतरवत्। यथेतरे गुणाः सर्वात्मत्वप्रभृतयः आध्यानायाम्नायन्ते, तद्वत्। तथाहि विंशिषन्ति समाम्नातारः उभयोच्चारणेन 'त्वमहमस्म्यहं च त्वमसि' इति। तच्चोभयरूपायां मतौ कर्तव्यायामर्थवद्भवति। अन्यथा हीदं विशेषेणोभयाम्नानमनर्थकं स्यात्। एकेनैव कृतत्वात्। ननूभयाम्नानस्य अर्थविशेषे परिकल्प्यमाने देवतायाः संसार्यात्मत्वापत्तेर्निकर्षः प्रसज्येतेत्युक्तम्। नैष दोषः। ऐकात्म्यस्यैवानेन प्रकारेणानुचिंत्यमानत्वात्। नन्वेवं ति स एवैकत्वदृढीकार आपद्येत। न वयमेकत्वदृढीकारं वारयामः। किं तर्हि, व्यतिहारेणेह द्विरूपा मतिः कर्तव्या वचनप्रामाण्यान्नैकरूपेत्येतात्रदुपपादयामः। फलतस्त्वेकत्वमपि दृढीभवति। यथा आध्यानार्थेऽपि सत्यकामादिगुणोपदेशे तद्गुण ईश्वरः प्रासिध्यति तद्वत्। तस्मादयमाध्यातव्यो व्यतिहारः समाने च विषये उपसंहर्तव्यो भवतीति ॥३७॥

२४ सत्याद्यधिकरणम्। सू० ३८।

सैव हि सत्यादयः ॥३८॥

'स यो हैतं महद्यक्षं प्रथमजं वेद सत्यं ब्रह्म' इत्यादिना वाजसनेयके सत्यविद्यां नामाक्षरोपासनां विधायानंतरमाम्नायते— 'तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन्मंडले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषः' इत्यादि। तत्र संशयः— किं द्वे एते सत्यविद्ये किंवैकैवेति। द्वे इति तावत्प्राप्तम्। भेदेन हि फलसंयोगो भवति 'जयतीमाँल्लोकान्' इति पुरस्तात्। 'हन्ति पाप्मानं जहाति च' इत्युपरिष्टात्। प्रकृताकर्षणं तूपास्यैकत्वादिति। एवं प्राप्ते ब्रूमः— एकैवेयं सत्यविद्येति। कुतः? 'यत्तत्सत्यम्' इति प्रकृताकर्षणात्। ननु विद्याभेदेऽपि प्रकृताकर्षणं पास्यैकत्वादुपपद्यत इत्युक्तम्। नैतदेवम्। यत्र तु विस्पष्टात्कारणान्तराद्विद्याभेदः प्रतीयते, तत्रैतदेवं स्यात्। अत्र तूभयथा संभवे ' ' इति प्रकृताकर्षणात्पूर्वविद्यासंबद्धमेव सत्यमुत्तरत्राकृष्यत इत्येकविद्यात्वनि :। यत्पुनरुक्तं श्रवणाद्विद्या-

न रमिति । अत्रोच्यते 'तरणोपनिषदहर' इति चांगांतरोपदेशस्य -वकमिदं फ न्तरश्रवणमित्यदो : । अपिचार्थवादादेव फले कल्पयितव्ये ति, विद्यैकत्वे चावयवेषु श्रूय णानि बहून्यपि फलान्यवयविन्यामेव विद्यायामुप हर्तव्यानि भ न्ति । स्मात्सैयमेका त्यविद्या तेन तेन विशेषेणोपेताम्नाता इत्यतः र्वं ए त्यादयो गुणा एकस्मिन्नेव प्रयोगे उपसंहर्तव्याः ॥

केचित्पुनरस्मिन्सूत्रे इदं च वा सनेयकमक्ष्यादित्यपुरुषविषयं वाक्यं, छांदोग्ये च— 'अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' 'अ य एषोऽक्षिणि पुरुषो दृश्यते' इत्युदाहृत्य, सैवेयमक्ष्यादित्यपुरुषविषया विद्योभयत्रैकैवेति कृत्वा, सत्यादीन्गुणान्वाज नेयिभ्यश्छंदोगानामुपसंहार्यान् मन्यन्ते । तन्न साधु लक्ष्यते । छांदोग्ये हि ज्योति ोमकर्मसंबंधिनीयमुद्गीथव्यपाश्रया विद्या विज्ञायते । तत्र ह्यादिमध्यावसानेषु कर्मसंबंधिचिह्नानि भवन्ति 'इयमेवर्गग्निः साम' इत्युपक्रमे, 'तस्य साम च गेष्णौ तस्मादुद्गीथः' इति मध्ये, 'य एवं विद्वान् ाम गायति' इत्युप हारे । नैवं वाजसनेयके किंचित्कर्मसंबंधि चिह्नमस्ति । तत्र प्रक्रमभेदाद्विद्याभेदे सति गुणव्यवस्थैव युक्तेति ॥३८॥

२५ कामाद्यधिकाराधि रण । सू० ३९ ।

ामादीतरत्र तत्र चायतनादिभ्यः ॥३९॥

'अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुंडरीकं वेश्म दहरोऽस्मिन्नंतराकाशः' इति प्रस्तुत्य छंदोगा अधीयते— 'एष आत्माऽपह पाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्य कल्पः' इत्यादि । तथा वाजसनेयिनः— 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी' इत्यादि । तत्र विद्यैकत्वं परस्परगुणयोगश्च किं वा नेति शये विद्यैकत्वमिति । तत्रेदमुच्यते कामादीति । सत्यकामादीत्यर्थः । यथा देवदत्तो दत्तः सत्यभामा भामेति । यदे च्छांदोग्ये हृदयाकाशस्य त्यकामत्वादिगुण ातमुपलभ्यते तदितरत्र वा नेयके ' वा एष महानज आत्मा' इत्यत्र ध्यते । यच्च वाजसनेयके शित्वाद्युपलभ्यते दपीतरत्र छांदोग्ये 'एष आत्माऽपहतपाप्मा'

इत्यत्र संबध्यते । कुतः ? आयतनादिसामान्यात् । समानं ुभयत्रापि हृदयमाय नं, समानश्च वेद्य ईश्वरः, समानं च तस्य सेतुत्वं लोकासंभेदप्रयोजनमित्येवमादि बहु सामान्यं दृश्यते । ननु विशेषोऽपि दृश्यते छांदोग्ये हृदया ाशस्य गुणयोगो, वाजसनेयके त्वाकाशाश्रयस्य ब्रह्मण इति । न । 'दहर उत्तरेभ्यः' [१.३.१४] इत्यत्र छांदोग्येऽप्याकाशशब्दं ब्रह्मैवेति प्रतिष्ठापितत्वात् । अयं त्वत्र विद्यते विशेषः । सगुणा हि ब्रह्मविद्या छांदोग्ये उपदिश्यते 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान्' इत्यात्मवत्कामानामपि वेद्यत्वश्रवणात् । वाजसनेयके तु निर्गुणमेव परं ब्रह्मोपदिश्यमानं दृश्यते 'अत ऊर्ध्वं विमोक्षाय ब्रूहि' 'असंगो ह्ययं पुरुषः' इत्यादिश्नप्रतिवचनसमन्वयात् । वशित्वादि तु तत्स्तुत्यर्थमेव गुणजातं वाजसनेयके संकीर्त्यते । तथाचोपरिष्टात् 'स एष नेति नेत्यात्मा' इत्यादिना निर्गुणमेव ब्रह्मोपसंहरति । गुणवतस्तु ब्रह्मण एकत्वाद्विभूतिप्रदर्शनायायं गुणोपसंहारः सूत्रितो, नोपासनाय, इति द्रष्टव्यम् ॥३९॥

२६ आदराधिकरणम् । सू० ४०-४१ ।

आदरादलोपः ॥४०॥

छांदोग्ये वैश्वानरविद्यां प्रकृत्य श्रूयते— 'तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयं स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात्प्राणाय स्वाहा' इत्यादि । तत्र पंच प्राणाहुतयो विहिताः । तासु च परस्तादग्निहोत्रशब्दः प्रयुक्तः 'य एतदेवं विद्वानग्निहोत्रं जुहोति' इति 'यथेह क्षुधिता बाला मातरं पर्युपासते । एवं सर्वाणि भूतान्यग्निहोत्रमुपा ते' इति च । तत्रेदं विचार्यते— किं भोजनलोपे लोपः प्राणाग्निहोत्रस्य उतालोप इति । 'तद्यद्भक्तं' इति भक्तागमनसंयो श्रवणाद्भक्तागमनस्य च भोजनार्थत्वाद्भोजनलोपे लोपः प्राणाग्निहोत्रस्येति । एवं प्राप्ते न लुप्येतेति तावदाह । कस्मात् ? आदरात् । तथाहि वैश्वानरविद्यायामेव जाबालानां श्रुतिः 'पूर्वोऽतिथिभ्योऽश्नीया् । यथा ह वै स्वयमहुत्वाग्निहोत्रं परस्य जुहुयादेवं तत्' इत्यतिथिभोजनस्य प्राथम्यं निंदित्वा स्वामिभोजनं प्रथमं प्रापयन्ती प्राणाग्निहोत्रे आदरं करोति। या हि न प्राथम्यलोपं हते नतरां । प्राथम्यवतोऽग्निहोत्रस्य लोपं सहेतेति मन्यते । ननु भोजनार्थभक्तागमन योगाद्भो न ोपे लोपः प्रापितः ।

स्य द्रव्यविशेषविधानार्थत्वात् । प्राकृते ग्निहोत्रे पयः भृतीनां द्रव्याणां नियतत्वादिहापि अग्निहोत्रशब्दात्कौंडपायिनामयनवत्तद्धर्मप्राप्तौ त्यां, भक्त-द्रव्यैकतागुणविशेषविधानार्थमिदं वाक्यं 'तद्यद्भक्तं' इति । अतो गुण ोपे न मुख्यस्येत्येवं प्राप्तम् । भोजनलोपेऽप्यद्भिर्वाऽन्येन वा द्रव्येणाविरुद्धेन प्रतिनिधानन्यायेन प्राणाग्निहोत्रस्यानुष्ठानमिति ॥४०॥

अत उत्तरं पठति—

उपस्थितेऽतस्तद्वचनात् ॥४१॥

उपस्थिते भोजनेऽतस्तस्मादेव भोजनद्रव्यात्प्रथमोपनिपतितात्प्राणाग्निहोत्रं निर्वर्तयितव्यम् । कस्मात् ? तद्वचनात् । तथाहि— 'तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयम्' इति सिद्धवद्भक्तोपनिपातपरामर्शेन परार्थद्रव्यसाध्यतां प्राणाहुतीनां विदधाति । ताः अप्रयोजकलक्षणापन्नाः सत्यः कथं भोजनलोपे द्रव्यान्तरं प्रतिनिधापयेयुः । नचात्र प्राकृताग्निहोत्रधर्मप्राप्तिरस्ति। कुंडपायिनामयने हि 'मासमग्निहोत्रं जुहोति' इति विध्युद्देशगतोऽग्निहोत्र-शब्दः तद्वद्भावं विधापयेदिति युक्ता तद्धर्मप्राप्तिः । इह पुनरर्थवादगतोऽग्निहोत्रशब्दो न तद्वद्भावं विधापयितुमर्हति । तद्धर्मप्राप्तौ च अभ्युपगम्यमानायां अग्न्युद्धरणादयोऽपि प्राप्येरन् । नचास्ति संभवः । अग्न्युद्धरणं ावद्धोमाधिकरणभावाय । नचायमग्नौ होमो भोजनार्थताव्याघातप्रसंगात् । भोजनार्थोपनीतद्रव्यसंबंधाच्च आस्य एवैष होमः । तथाच जाबालश्रुतिः "पूर्वोऽतिथिभ्योऽश्नीयात्" इत्यास्याधारामेवेमां होमनिर्वृत्तिं दर्शयति । अत एव चेहापि ंपादिकान्येवाग्निहोत्रांगानि दर्शयति 'उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः' इति । वेदिश्रुतिश्चात्र स्थंडिलमात्रोपलक्षणार्था द्र व्या । मुख्याग्निहोत्रे वेद्यभावात् । दंगानां चेह संपिपादयिषितत्वात् । भोजनेनैव च कृतकालेन योगान्न अग्निहोत्रकालावरो संभवः । एवमन्येऽप्युपस्थानादयो धर्माः केचित्कथंचिद्विरुध्यन्ते । तस्माद्भोजनपक्ष एवै मंत्रद्रव्यदेवतासंयोगात्पंच होमा निर्वर्तयितव्याः । यत्त्वादरदर्शनवचनं द्भोजनपक्षे प्राथम्यविधानार्थम् । न स्ति वचनस्यातिभारः । न त्वनेनास्य नित्यता शक्यते दर्शयितुम् । तस्माद्भोजनलोपे ोप एव प्राणाग्निहोत्रस्येति ॥४१॥

२ तन्निर्धारणाधिकरणम् । सू॰ २ ।

तन्निर्धारणानि मस्तद्दृष्टेः पृथग्घ्यप्रतिबं : फलम् ॥४२॥

न्ति ंगव्यपाश्रयाणि विज्ञानानि— 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्येवमादीनि । किं तानि नित्यान्येव स्युः कर्मसु पर्णमयीत्वादिवत्, उतानित्यानि गोदोहनादिवदिति विचारयामः । किं तावत्प्राप्तं ? नित्यानीति । कुतः ? प्रयोगवचनपरि हात् । अनारभ्याधीतान्यपि ह्येतान्युद्गीथादिद्वारेण क्रतुसंबंधात्क्रतुप्रयोगवचनेनैव अंगान्तरवत्संस्पृश्यन्ते । यत्त्वेषां स्ववाक्येषु फल वणम् 'आपयिता ह वै कामानां भवति' इत्यादि, तद्वर्तमानापदेशरूपत्वादर्थवादमात्रमेव, अपापश्लोकश्रवणादिवत्, न फलप्रधानम् । तस्माद्यथा "यस्य पर्णमयी जुहूर्भवति न पापं श्लोकं शृणोति" इत्येवमादीनामप्रकरणपठितानामपि जुह्वादिद्वारेण क्रतुप्रवे त्प्रकरणपठितवन्नित्यता, एवमुद्गीथाद्युपासनानामपीति । एवं प्राप्ते ब्रूमः— तन्निर्धारणानियम इति । यान्येतान्युद्गीथादिकर्मगुणयाथात्म्यानिर्धारणानि रसतम आप्तिः मृद्धिर्मुख्यप्राण आदित्य इत्येवमादीनि, नैतानि नित्यवत्कर्मसु नियम्येरन् । कुतः ? तद्दृष्टेः । तथाह्यनित्यत्वमेवंजातीयकानां दर्शयति तिः— 'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद' इत्यविदुषोऽपि क्रियाभ्यनुज्ञानात् । प्रस्तावादिदेवताविज्ञानविहीनानामपि प्रस्तोत्रादीनां याजनाध्यवसानदर्शनात् 'प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान्प्रस्तोष्यसि' 'तां चेदविद्वानुद्गास्यसि' 'तां चेदविद्वान्प्रतिहरिष्यसि' इति च । अपि चैवंजातीयकस्य कर्मव्यपाश्रयस्य विज्ञानस्य पृथगेव कर्मणः फलमुपलभ्यते कर्मफलसि द्ध्यप्रतिबंधः तत्समृद्धिरतिशयविशेषः कश्चित् 'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद । नाना तु विद्या चाविद्या च यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इति । तत्र नाना त्विति विद्वदविद्वत्प्रयोगयोः पृथक्करणाद्वीर्यवत्तरमिति च तरप्प्रत्यय योगाद्विद्याविहीनमपि कर्म वीर्यवदिति गम्यते । तच्चानित्यत्वे विद्याया उपपद्यते । नित्यत्वे तु कथं तद्विहीनं कर्म वीर्यवदित्यनुज्ञायेत । सर्वांगोप हारे हि वीर्यवत्कर्मेति स्थितिः । तथा लोकसामादिषु प्रतिनियतानि प्रत्युपा नं फलानि शिष्यन्ते 'कल्पन्ते हास्मै लोका र्ध्वाश्चावृत्ता ' इत्येवमादीनि ।

नचेदं फलश्र मर्थवादमात्रं युक्तं प्रति पत्तुम्। थाहि गुणवाद आपद्येत। फलोपदेशे तु मुख्यवादोपपत्तिः। प्रयाजादिषु त्वितिकर्तव्यताकांक्षस्य क्रतोः प्रकृतत्वात्तादर्थ्ये ति युक्तं फलश्रुतेरर्थवादत्व । तथानारभ्याधीतेष्वपि पर्णमयीत्वादिषु। नहि पर्णमयीत्वादीनां अक्रियात्मकानां आश्रयमंतरेण फल धोऽवकल्पते। गोदोहनादीनां हि प्रकृताप्प्रणयनाद्याश्रयलाभादुपपन्नः फलविधिः। तथा बैल्वादीनामपि प्रकृतयूपाद्याश्रयलाभादुपपन्नः फलविधिः। नतु पर्णमयीत्वादिष्वेवंविधः कश्चिदाश्रयः प्रकृतोऽस्ति। वाक्येनैव तु जुह्वाद्याश्रयतां विवक्षित्वा फलेऽपि विधिं विवक्षतो वाक्यभेदः स्यात्। उपासनानां क्रियात्मकत्वाद्विशिष्टविधानोपपत्तेः उद्गीथाद्याश्रयाणां फले विधानं न विरुध्यते। तस्माद्यथा क्रत्वाश्रयाण्यपि गोदोहनादीनि फलसंयोगादनित्यानि, एवमुद्गीथाद्युपासनान्यपीति द्रष्टव्यम्। अतएव च कल्पसूत्रकारा नैवंजातीयकान्युपासनानि क्रतुषु कल्पयांचक्रुः ॥४२॥

२८ प्रदानाधिकरणम्। सू० ४३।

प्रदानवदेव तदुक्तम् ॥४३॥

वाजसनेयके 'वदिष्याम्येवाहमिति वाग्दध्रे' इत्यत्राध्यात्मं वागादीनां प्राणः श्रेष्ठोऽवधारितः, अधिदैवत ग्न्यादीनां वायुः। तथा छांदोग्ये 'वायुर्वाव संवर्गः' इत्यत्राधिदैवतं अग्न्यादीनां वायुः संवर्गोऽवधारितः 'प्राणो वाव संवर्गः' इत्यत्राध्यात्मं वागादीनां प्राणः। तत्र संशयः— किं पृथगेवेमौ वायुप्राणावुपगंतव्यौ स्यातां, अपृथग्वेति। अपृथगेवेति तावत्प्राप्तं, तत्त्वाभेदात्। नह्यभिन्ने तत्त्वे पृथगनुचिंतनं न्याय्यम्। दर्शयति च श्रुतिरध्यात्ममधिदैवतं च तत्त्वाभेदम् 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' इत्यारभ्य। तथा 'त एते सर्व एव समाः सर्वेऽनंताः' इत्याध्यात्मिकानां प्राणानामाधिदैविकीं विभूतिमात्मभूतां दर्शयति। तथान्यत्रापि तत्र तत्र अध्यात्ममधिदैवतं च बहुधा त्वाभेददर्शनं भवति। क्वचिच्च 'यः प्राणः स वायुः' इति स्प मेव वायुं प्राणं चैकं करोति। तथोदाहृतेऽपि वाज नेयिब्राह्मणे 'यतश्चोदेति सूर्यः' इत्यस्मिन्नुपसंहारश्लोके 'प्राणाद्वा एष उदेति प्राणेऽस्तमेति' इति प्राणेनैवोपसंहरन्नेकत्वं दर्शयति। 'तस्मादेकमेव व्रतं चरेत्प्राण्याच्चैवापान्याच्च' इति च प्राणव्रतेनैव एकेनोपसंहरन्नेतदेव द्रढयति। था छांदो-

न्येऽपि परस्तात् 'महात्मनश्चतुरो देव एकः कः गार
इत्येकमेव संवर्गं गमयति । न ब्रवीति एक एकेषां चतुर्णां
परेषामिति । स्मादपृथक्त्वमुपगमनस्येति । एवं प्राप्ते ब्रूम
वायुप्राणावुपगंतव्याविति । कस्मात् ? पृथगुपदेशात् । आ
अध्यात्माधिदैवविभागोपदेशः । सोऽसत्याध्यानपृथक्त्वेऽनर्थक
ननूक्तं न पृथगनुचिंतनं तत्त्वाभेदादिति । नैष दोषः । तत्त्वा
भेदादुपदेशभेदवशेन अनुचिंतनभेदोपपत्तेः । श्लोकोपन्यासस्
दाभिप्रायेणाप्युपपद्यमानस्य पूर्वोदितध्येयभेदानिराकरणसामर्थ्या
यथैषां प्राणानां मध्यमः प्राण एवमेतासां देवतानां वायुः' इ
पमेयकरणात् । एतेन व्रतोपदेशो व्याख्यातः । 'एकमेव व्रत
कारो वागादिव्रतनिवर्तनेन प्राणव्रतप्रतिपत्त्यर्थः । भग्नव्रतानि
न्युक्तानि 'तानि मृत्युः श्रमो भूत्वोपयेमे' इति श्रुतेः । न वायु
'अथातो व्रतमीमांसा' इति प्रस्तुत्य तुल्यवद्वायुप्राणयोः उ
निर्धारितत्वात् । 'एकमेव व्रतं चरेत्' इति चोक्त्वा 'तेनो एत
ायुज्यं सलोकतां जयति' इति वायुप्राप्तिं फलं ब्रुवन्वायुव्रतम
यति । देवतेत्यत्र वायुः स्यादपरिच्छिन्नात्मकत्वस्य प्रेप्सितत्वात्
योगाच्च 'ैषाऽनस्तमिता देवता यद्वायुः' इति । तथा 'तौ
संवर्गौ वायुरेव देवेषु प्राणः प्राणेषु' इति भेदेन व्यपदिशति ।
पंचान्ये पंचान्ये दश सन्तस्तत्कृतम्' इति च भेदेनैवोपसंहरति
मेवोपगमनम् । प्रदानवत् । यथा "इंद्राय राज्ञे पुरोडाशमेकाद
द्रायाधिराजायेंद्राय स्वराज्ञे" इत्यस्यां त्रिपुरोडाशिन्यामिष्टौ, "स
मयन्नवद्यत्यछंबट्कारं" इत्यतो वचनादिंद्राभेदाच्च, हप्र
राजादिगुणभेदाद्याज्यानुवाक्याव्यत्यासविधानाच्च यथान्यासमेव
क्त्वात्प्रदानपृथक्त्वं भवति । एवं तत्त्वाभेदेऽपि आध्येयांशपृथक्त्व
थक्त्वामित्यर्थः । तदुक्तं संकर्षे 'नाना वा देवता पृथग्ज्ञानात्' इ
तु द्रव्यदेवताभेदाद्यागभेदो विद्यते । नैवमिह विद्याभेदोऽस्ति ।
हाराभ्यां अध्यात्माधिदैवोपदेशेषु एकविद्याविधानप्रतीतेः ।
ध्यात ाधिदैवभेदात्प्र त्तिभेदो भवति, अग्निहोत्र इव सा प्र

दात् । इत्येतावदाभिप्रेत्य प्रदानवदित्युक्तम् ॥४३॥

९ भूयस्त्वाधिकरणम् । सू० ४४–५२ ।

लिंगभूयस्त्वात्तद्धि बलीयस्तदपि ॥४४॥

वाजसनेयिनोऽग्निरहस्ये 'नैव वा इदमग्रे सदासीत्' इत्येतस्मिन्ब्राह्मणे मनोऽधिकृत्याधीयते 'तत्षट्त्रिंशत सहस्राण्यपश्यदात्मनोऽग्नीनर्कान्मनोमयान्मनश्चितः' इत्यादि । तथैव 'वाक्चितः प्राणचितश्चक्षुश्चितः श्रोत्रचितः कर्मचितोऽग्निचितः' इति पृथगग्नीनामनन्ति सांपादिकान् । तेषु संशयः— किमेते मनश्चिदादयः क्रियानुप्रवेशिनस्तच्छेषभूताः, उत स्वतंत्राः केवलविद्यात्मका इति । तत्र प्रकरणात्क्रियानुप्रवेशे प्राप्ते, स्वातंत्र्यं तावत्प्रतिजानीते, लिंगभूयस्त्वादिति । भूयांसि हि लिंगान्यस्मिन्ब्राह्मणे केवलविद्यात्मकत्वमेषामुपोद्बलयन्ति दृश्यन्ते 'तद्यत्किंचेमानि भूतानि मनसा संकल्पयन्ति तेषामेव सा कृतिः' इति, 'तान्हैतानेवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते' इति चैवंजातीयकानि । तद्धि लिंगं प्रकरणाद्बलीयः । तदप्युक्तं पूर्वस्मिन्कांडे— "श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" इति ॥४४॥

पूर्वविकल्पः प्रकरणात्स्यात्क्रिया मानसवत् ॥४५॥

नैतद्युक्तं स्वतंत्रा एतेऽग्नयोऽनन्यशेषभूता इति । पूर्वस्य क्रियामयस्याग्नेः प्रकरणात्तद्विषय एवायं विकल्पविशेषोपदेशः स्यान्न स्वतंत्रः । ननु प्रकरणाल्लिंगं बलीयः । सत्यमेवमेतत् । लिंगमपि त्वेवंजातीयकं न प्रकरणाद्बलीयो भवति । अन्यार्थदर्शनं ह्येतत् । सांपादिकाग्निप्रशंसारूपत्वात् । अन्यार्थदर्शनं च असत्यामन्यस्यां प्राप्तौ गुणवादेनाप्युपपद्यमानं न प्रकरणं बाधितुमुत्सहते । तस्मात्सांपादिका अप्येतेऽग्नयः प्रकरणात्क्रियानुप्रवेशिनः एव स्युः । मानसवत् । यथा दशरात्रस्य दशमेऽहनि अविवाक्ये पृथिव्या पात्रेण समुद्रस्य सोमस्य प्रजापतये देवतायै गृह्यमाणस्य ग्रहणासादनहवनाहरणोपह्वानभक्षणानि मानसान्येवाम्नायन्ते । स च मानसोऽपि ग्रहकल्पः क्रियाप्रकरणात्क्रियाशेष एव भवति । एवमयमप्यग्निकल्प इत्यर्थः ॥४५॥

अतिदेशाच्च ॥४६॥

अतिदेशश्चैषामग्नीनां क्रियानुप्रवेशमुपोद्बलयति— 'षट्त्रिंशत्सहस्रा-

ण्यग्नयोऽर्कार षामेकैक एव तावान्यावान ौ पूर्वः' इति । ति हि सामान्ये-ऽतिदेशः प्रवर्तते । ततश्च पूर्वेणे ाचितेन क्रियानुप्रवेशिनाऽग्निना सांप दि-कानग्नीनतिदिशन् क्रियानुप्रवेशमेवैषां द्यो यति ॥४६॥

**विद्यैव निर्धारणात् ॥४ ॥**

तु-शब्दः पक्षं व्यावर्तयति । विद्यात्मका एवैते स्वतंत्रा मनाश्चिदाद-योऽग्नयः स्युर्न क्रियाशेषभूताः । तथाहि निर्धारयति 'ते हैते विद्याचि एव' इति । 'विद्यया हैवैत एवंविदश्चिता भवन्ति' इति च ॥४७॥

**दर्शनाच्च ॥४८॥**

दृश्यते चैषां स्वातंत्र्ये लिंगम् । तत्पुरस्ताद्दर्शितम् 'लिंगभूयस्त्वात्' [३.३.४४] इत्यत्र ॥४८॥

ननु लिंगमप्यसत्यां अन्यस्यां प्राप्तावसाधकं कस्यचिदर्थस्येत्यपास्य तत्प्रकरणसामर्थ्यात्क्रियाशेषत्वमध्यवसितं, इत्यत उत्तरं पठति—

**श्रुत्यादिबलीयस्त्वाच्च न ाधः ॥४९॥**

नैवं प्रकरणसामर्थ्यात्क्रियाशेषत्वमध्यव ाय स्वातंत्र्यपक्षो बाधितव्यः। श्रुत्यादेर्बलीयस्त्वात् । बलीयांसि हि प्रकरणात् श्रुतिलिंगवाक्यानीति स्थितं श्रुतिलिंगसूत्रे । तानि चेह स्वातंत्र्यपक्षं साधयन्ति दृश्यन्ते । कथम् ? श्रुतिः तावत् 'ते हैते विद्याचित एव' इति । तथा लिंगम् 'सर्वदा र्वाणि भूतानि चिन्वन्त्यपि स्वपते' इति । तथा वाक्यमपि 'विद्यया हैवैत एवंवि-दश्चिता भवन्ति' इति । 'विद्याचित एव' इति हि सावधारणेयं श्रुतिः क्रियानुप्रवेशेऽमीषामभ्युपगम्यमाने पीडिता स्यात् । ननु अबाह्यसाधनत्वा-भिप्रायमिदमवधारणं भविष्यति । नेत्युच्यते । तदभिप्रायतायां हि 'विद्या-चित' इतीयता स्वरूपसंकीर्तनेनैव कृतत्वादनर्थ मवधारणं भवेत् । स्वरूप-मेव ह्येषामबाह्यसाधनत्वमिति । अबा ाधनत्वेऽपि तु मानसग्रहवत्क्रियानु-प्रवेशशंकायां तन्निवृत्तिफलमवधारणमर्थवद्भविष्यति । तथा 'स्वपते जाग्रते चैवंविदे सर्वदा सर्वाणि भूतान्येतानग्नींश्चिन्वन्ति' इ सातत्यदर्शनमेषां स्वातंत्र्येऽवकल्पते । यथा सांपादिके वाक्प्राणमयेऽग्निहोत्रे "प्राणं तदा वाचि जुहोति...वाचं तदा प्राणे जुहोति" इति चोक्त्वोच्यते— "एते अनंते अमृते आहुती जाग्रच्च स्वपं सततं जुहोति" इति । तद्वत् । क्रियानुप्र-

वेशे तु क्रियाप्रयोगस्याल्पकालत्वेन न सातत्येनैषां प्रयोगः कल्पेत । नचेदमर्थवादमात्रमिति न्याय्यम् । यत्र हि विर ग्रे विधायको लिङादिरुपलभ्यते, युक्तं त्र संकीर्तनमात्रस्यार्थवादत्वम् । इह तु विस्पष्टविध्यंतरानुपलब्धेः संकीर्तनादेवैषां विज्ञानविधानं कल्पनीयम् । तच्च यथासंकीर्तनमेव कल्पयि शक्यत इति ।तत्यदर्शनात्तथाभूतमेव कल्प्यते । ततश्च सामर्थ्यादेषां स्वा त्र्यासिद्धिः । एतेन 'तद्यत्किंचेमानि भूतानि मनसा संकल्पयन्ति तेषामेव सा कृतिः' इत्यादि व्याख्यातम् । तथा क्य पि 'एवंविदे' इति पुरुषविशेषसंबंधमेव एषामाचक्षाणं न ऋतु बंधं मृष्यते । तस्मात्स्वातंत्र्यपक्ष एव ज्यायानिति ॥४९॥

अनुबंधादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च दुक्तम् ॥५०॥

इतश्च प्रकरणमुपमृद्य स्वातंत्र्यं मनश्चिदादीनां प्रतिपत्तव्यम् । यत्क्रियावयवान्मनआदिव्यापारेष्वनुबध्नाति "ते मनसैवाधीयन्त मनसाचीयन्त मनसैव ग्रहा अगृह्यन्त मनसाऽस्तुवन्मनसाऽशंसन्यत्किंच यज्ञे कर्म क्रियते यत्किंच यज्ञियं कर्म मनसैव तेषु तन्मनोमयेषु मनश्चित्सु मनोमयमेव क्रियते" इत्यादिना । संपत्फलो ह्ययमनुबंधः । नच प्रत्यक्षाः क्रियावयवाः न्तः संपदा लिप्सितव्याः । नचात्रोद्गीथाद्युपासनवत्क्रियांगसंबंधात्तदनुप्रवेशित्वं आशंकितव्यं, श्रुतिवैरूप्यात् । नह्यत्र क्रियांगं किंचिदादाय तस्मिन्नदो नामाध्यवसितव्यमिति वदति । षट्त्रिंशत्सहस्राणि तु मनोवृत्तिभेदानादाय तेष्वग्नित्वं ग्रहादींश्च कल्पयति, पुरुषयज्ञादिवत् । संख्या चेयं पुरुषायुषस्याहःसु दृष्टा सती तत्संबंधिनीषु मनोवृत्तिष ।रोप्यत इति द्रष्टव्यम् । एवमनुबंधात्स्वातंत्र्यं मनश्चिदादीनाम् । आदिशब्दादातिदेशाद्यपि यथासंभवं योजयितव्यम् । तथाहि— "तेषामेकैक एव तावान्यावानसौ पूर्वः" इति क्रियामयस्याग्नेर्माहात्म्यं ज्ञानमयानामेकैकस्यातिदिशन्क्रियायामनादरं दर्शयति । नच सत्येव क्रियासंबंधे विकल्पः पूर्वेणोत्तरेषामिति शक्यं वक्तुम् । नहि येन व्यापारेणाहवनीयधारणादिना पूर्वः क्रियायामुपकरोति, तेनोत्तरे उपकर्तुं शक्नुवन्ति । यत्तु पूर्वपक्षेऽप्यतिदेश उपोद्बलक इत्युक्तं ति हि सामान्येऽतिदे : प्रवर्तत इति, द त्पक्षेऽप्यग्नित्वसामान्येन अतिदेश भवात्प्रत्यु- । अस्ति हि पादिकानामप्यग्नीनामग्नित्वमिति । श्रुत्यादीनि च कार-

ङ्गानि दर्शितानि । एवमनुबंधादिभ्यः कारणेभ्यः स्वातंत्र्यं मनश्चिदादीनाम्। प्रज्ञान्तरपृथक्त्ववत् । यथा प्रज्ञान्तराणि शांडिल्यविद्याप्रभृतीनि स्वेन स्वेनानुबंधेन अनुबध्यमानानि पृथगेव कर्मभ्यः प्रज्ञान्तरेभ्यश्च स्वतंत्राणि भवन्त्येवमिति । दृष्टश्च अवेष्टेः राजसूयप्रकरणपठितायाः प्रकरणादुत्कर्षो वर्णत्रयानुबंधाद्राजयज्ञत्वाच्च राजसूयस्य । तदुक्तं प्र मे कांडे— "क्रत्वर्थायामिति चेन्न वर्णत्रयसंयोगात्" इति ॥५०॥

**न सामान्यादप्युपलब्धेर्मृत्युवन्नहि लोकापत्तिः ॥५१॥**

यदुक्तं मानसवदिति, तत्प्रत्युच्यते । न मानसग्रहसामान्यादपि मनश्चिदादीनां क्रियाशेषत्वं कल्प्यम् । पूर्वोक्तेभ्यः श्रुत्यादिहेतुभ्यः केवलपुरुषार्थत्वोपलब्धेः । नहि किंचित्कस्यचित्केनचित्सामान्यं न भवति । नच तावता यथास्वं वैषम्यं निवर्तते । मृत्युवत् । यथा 'स वा एष एव मृत्युर्य एष एतस्मिन्मंडले पुरुषः' इति, 'अग्निर्वै मृत्युः' इति च अग्न्यादित्यपुरुषयोः मानेऽपि मृत्युशब्दप्रयोगे, नात्यंतसाम्यापत्तिः । यथा च 'असौ वाव लोको गौतमाग्निस्तस्यादित्य एव समित्' इत्यत्र न समिदादिसामान्याल्लोकस्याग्निभावापत्तिः, तद्वत् ॥५१॥

**परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबंधः ॥५२॥**

परस्मादपि 'अयं वाव लोक एषोऽग्निश्चितः' इत्यस्मिन्ननंतरे ब्राह्मणे ताद्विध्यं केवलविद्याविधित्वं शब्दस्य प्रयोजनं लक्ष्यते, न शुद्धकर्मांगविधित्वम् । तत्र हि— "विद्यया तदारोहन्ति यत्र कामाः परागताः । न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः" इत्यनेन श्लोकेन केवलं कर्म निंदन्विद्यां च प्रशंसन्निदं गमयति । तथा पुरस्तादपि 'यदेतन्मंडलं तपति' इत्यस्मिन्ब्राह्मणे विद्याप्रधानत्वमेव लक्ष्यते 'सोऽमृतो भवति मृत्युर्ह्यस्यात्मा भवति' इति विद्याफलेनैवोपसंहारान्न कर्मप्रधानता । तत्सामान्यादिहापि तथात्वम् । भूयांसस्त्वग्न्यवयवाः संपादयितव्या विद्यायां इत्येतस्मात्कारणादग्निनानुबध्यते विद्या, न कर्मांगत्वात् । तस्मान्मनश्चिदादीनां केवलविद्यात्मकत्वसिद्धिः ॥५२॥

**३० ऐकात्म्याधिकरणम् । सू० ५३–५४ ।**

**एक आत्मनः शरीरे भावात् ॥५३॥**

इह देहव्यतिरिक्तस्यात्मनः सद्भावः समर्थ्यते बंधमोक्षाधिकारसिद्धये। नह्यसति देहव्यतिरिक्त आत्मानि परलोकफलाश्चोदना उपपद्येरन्कस्य ब्रह्मात्मत्वमुपादिश्येत। ननु शास्त्रप्रमुख एव प्र मे पादे शास्त्रफलोपभोगयोग्यस्य देहव्यतिरिक्तस्यात्मनोऽस्तित्वमुक्तम्। सत्यमुक्तं भाष्यकृता। नतु तत्रात्मास्तित्वे सूत्रमस्ति। इह तु स्वयमेव सूत्रकृता तदस्तित्वमाक्षेपपुरःसरं प्रतिष्ठापितम्। इत एव चाकृष्याचार्येण श रस्वामिना प्रमाणलक्षणे वर्णितम्। अतएव च भगवतोपवर्षेण प्रथमे तंत्रे आत्मास्तित्वाभिधानप्रसक्तौ शारीरके वक्ष्याम इत्युद्धारः कृतः। इह चेदं चोदनालक्षणेषूपानेषु विचार्यमाणेष्वात्मास्तित्वं विचार्यते कृत्स्नशास्त्रशेषत्वप्रदर्शनाय। अपिच पूर्वस्मिन्नधिकरणे प्रकरणोत्कर्षाभ्युपगमेन मनश्चिदादीनां पुरुषार्थत्वं वर्णितम्। कोऽसौ पुरुषो यदर्था एते मनश्चिदादय इत्यस्यां प्र क्ताविदं देहव्यतिरिक्तस्यात्मनोऽस्तित्वमुच्यते। तदस्तित्वाक्षेपार्थं चेदमादिमं सूत्रम्। आक्षेपपूर्विका हि परिहारोक्तिर्विवक्षितेऽर्थे स्थूणानिखननन्यायेन दृढां बुद्धिमुत्पादयेदिति ॥५३॥

अत्रैके देहमात्रात्मदर्शिनो लोकायतिका देहव्यतिरिक्तस्यात्मनोऽभावं मन्यमानाः समस्तव्यस्तेषु बाह्येषु पृथिव्यादिष्वदृष्टमपि चैतन्यं शरीराकारपरिणतेषु भूतेषु स्यादिति भावयन्तस्तेभ्यश्चैतन्यं मदशक्तिवद्विज्ञानं चैतन्यविशिष्टः कायः पुरुष इति चाहुः। न स्वर्गगमनायापवर्गगमनाय वा समर्थो देहव्यतिरिक्त आत्मास्ति, यत्कृतं चैतन्यं देहे स्यात्। देह एव तु चेतनश्चात्मा चेति प्रतिजानते। हेतुं चाचक्षते शरीरे भावादिति। यद्धि यस्मिन्सति भवत्यसति च न भवति, तत्तद्धर्मत्वेनाध्यवसीयते यथाऽग्निधर्मावौष्ण्यप्रकाशौ। प्राणचेष्टाचै न्यस्मृत्यादयश्च आत्मधर्मत्वेनाभिमता आत्मवादिनां तेऽप्यंतरेव देहे उपलभ्यमानाः बहिश्चानुपलभ्यमानाः असिद्धे देहव्यतिरिक्ते धर्मिणि देहधर्मा एव भवितुमर्हन्ति। तस्मादव्यतिरेको देहादात्मन इति॥

एवं प्राप्ते ब्रूमः—

**व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत् ॥५४॥**

नत्वेतदस्ति यदुक्तमव्यतिरेको देहादात्मन इति। व्यतिरेक एवास्य देहाद्भवितुमर्हति तद्भावाभावित्वात्। यदि देहभावे भावाद्देहधर्मत्वं आत्म-

णां मन्येत, ततो देहभावेऽप्यभावादतद्धर्मत्वमेवैषां किं न मन्येत ? देहधर्मवैलक्षण्यात्। ये हि देहधर्मा रूपादयस्ते यावद्देहं भवन्ति। प्राणचेष्टादयस्तु सत्यपि देहे मृतावस्थायां न भवन्ति। देहधर्माश्च रूपादयः परैरप्युपलभ्यन्ते नत्वात्मधर्माश्चैतन्यस्मृत्यादयः। अपिच सति हि तावद्देहे जीवदवस्थायामेषां भावः शक्यते निश्चेतुं नत्वसत्यभावः। पतितेऽपि कदाचिदस्मिन्देहे देहान्तरसंचारेणात्मधर्मा अनुवर्तेरन्। संशयमात्रेणापि परपक्षः प्रतिषिध्यते। किमात्मकं च पुनरिदं चैतन्यं मन्यते, यस्य भूतेभ्य उत्पत्तिमिच्छतीति परः पर्यनुयोक्तव्यः। नहि भूतचतुष्टयव्यतिरेकेण लोकायतिकः किंचित्तत्त्वं प्रत्येति। यदनुभवनं भूतभौतिकानां तच्चैतन्यमिति चेत्। तर्हि विषयत्वात्तेषां न तद्धर्मत्वमश्नुवीत, स्वात्मनि क्रियाविरोधात्। नह्यग्निरुष्णः सन्स्वात्मानं दहति। नहि नटः शिक्षितः सन्स्वस्कंधमधिरोक्ष्यति। नहि भूतभौतिकधर्मेण सता चैतन्येन भूतभौतिकानि विषयीक्रियेरन्। नहि रूपादिभिः स्वरूपं पररूपं वा विषयीक्रियते। विषयीक्रियन्ते तु बाह्याध्यात्मिकानि भूतभौतिकानि चैतन्येन। अतश्च यथैवास्या भूतभौतिकविषयाया उपलब्धेर्भावोऽभ्युपगम्यते, एवं व्यतिरेकोऽप्यस्याः तेभ्योऽभ्युपगंतव्यः। उपलब्धिस्वरूप एव च न आत्मेत्यात्मनो देहव्यतिरिक्तत्वम्। नित्यत्वं चोपलब्धेः। ऐकरूप्यात्। अहमिदमद्राक्षमिति चावस्थान्तरयोगेऽप्युपलब्धृत्वेन प्रत्यभिज्ञानात्। स्मृत्याद्युपपत्तेश्च। यत्तूक्तं शरीरे भावाच्छरीरधर्म उपलब्धिरिति, तद्वर्णितेन प्रकारेण प्रत्युक्तम्। अपिच सत्सु प्रदीपादिषूपकरणेषु उपलब्धिर्भवति असत्सु न भवतीति नचैतावता प्रदीपादिधर्म एवोपलब्धिर्भवति। एवं सति देहे उपलब्धिर्भवत्य ति च न भवतीति, न देहधर्मो भवितुमर्हति। उपकरणत्वमात्रेणापि प्रदीपादिवद्दे ोपयोगोपपत्तेः। नचात्यंतं देहस्योपलब्धावुपयोगोऽपि दृश्यते, निश्चेष्टेऽप्यस्मिन्देहे स्वप्ने नानाविधोपलब्धिदर्शनात्। तस्मादनवद्यं देहव्यतिरिक्तस्यात्मनोऽरि त्वम् ॥५४॥

## ३१ अंगावबद्धाधिकरण । सू० ५५–५६ ।

**अंगावबद्धास्तु शाखासु हि प्रतिवेदम् ॥५५॥**

समाप्ता प्रासंगिकी था, संप्रति प्रकृतामेवानु मिहे 'ओमित्येतदक्षरमुद्गीथमुपासीत' 'लोकेषु पंचविधं सामोपासी ' 'उक थमिति

वै प्र । वदन्ति तदिदमे ', 'इयमे पृथिवी', 'अयं वाव ोः'
'एषोऽग्निश्चितः' इत्येवमाद्या य उद्गीथादिकर्मांगावबद्धाः प्रत्ययाः प्रतिवेदं शाखाभेदेषु विहिताः, ते तत्तच्छाखागतेष्वेवोद्गीथादिषु भ युः, अथवा सर्वशाखागतेष्विति विशयः । प्रतिशाखं च स्वरादिभेदादुद्गीथादिभेदानुपादायायमुपन्या ः । किं तावत्प्राप्तम्? स्वशाखागतेष्वेवोद्गीथादिषु विधीयेरन्निति । कुतः? संनिधानात् । 'उद्गीथमुपासीत' इति हि सामान्यविहितानां विशेषाकांक्षायां निकृष्टेनैव स्वशाखागतेन विशेषेणाकांक्षादिनिवृत्तेः । द-तिलंघनेन शाखान्तरविहितविशेषोपादाने कारणं नास्ति । तस्मात्प्रतिशाखं व्यवस्थेति । एवं प्राप्ते ब्रवीति— अंगावबद्धास्त्विति । तु-शब्दः पक्षं व्यावर्तयति । नैते प्रतिवेदं स्वशाखास्वेव व्यवतिष्ठेरन् । अपितु सर्वशाखास्वनुवर्तेरन् । कुतः? उद्गीथादिश्रुत्यविशेषात् । स्वशाखाव्यवस्थायां हि 'उद्गीथमुपासीत' इति ामान्यश्रुतिरविशेषप्रवृत्ता सती निधानवशेन विशेषे व्यवस्थाप्यमाना पीडिता स्यात् । नचैतन्न्याय्यम् । संनिधानात्तु श्रुतिर्बलीय ी । नच ामान्याश्रयः प्रत्ययो नोपपद्यते । स्मात्स्वरादिभेदे त्यपि उद्गीथत्वाद्यविशेषात्सर्वशाखागतेष्वेव उद्गीथादिष्वेवंजातीयकाः प्रत्ययाः स्युः ॥५५॥

मंत्रादिवद्वाऽविरोधः ॥५६॥

अथवा नैवात्र विरोधः शंकितव्यः । कथमन्यशाखागतेषूद्गीथादिषु अन्यशाखाविहिताः प्रत्यया भवेयुरिति । मंत्रादिवदविरोधोपपत्तेः । तथाहि मंत्राणां कर्मणां गुणानां च शाखान्तरोत्पन्नानामपि शाखान्तरे उप ग्रहो दृश्यते । येषामपि हि शाखिनां "कुटरुरसि" इत्यश्मादानमंत्रो नाम्नातः, तेषामप्यसौ विनियोगो दृश्यते "कुक्कुटोऽसीत्यश्मानमादत्ते कुटरुरसीति वा" इति । येषामपि मिदादयः प्रयाजा नाम्नातास्तेषामपि तेषु गुणविधिराम्नायते— "ऋतवो वै प्रयाजाः मानत्र होतव्याः" इति । तथा येषामपि "अजोऽग्नीषोमीयः" इति जातिविशेषोपदेशो नास्ति, तेषामपि तद्विषयो त्रवर्ण उपलभ्यते— "छागस्य वपाया मेद ोऽनुब्रूहि" इति । था वेदान्तरोत्पन्नानामपि "अग्नेर्वैहोत्रं वेरध्वरम्" इत्येवमादिमंत्राणां वेदान्तरे परिग्रहो ः । था बह्वृचपठितस्य सूक्तस्य "यो एव प्र मो मन-

स्वाम्" इत्यस्य "अध्वर्यवे सजनीयं शस्यम्" इत्यत्र परिग्रहो : । ा-
ग्रथाश्रयाणां कर्मांगानां सर्वत्रानुवृत्तिः, एवमाश्रितानामपि प्रत्ययानामित्य-
विरो : ॥५६॥

३२ भूमज्य स्त्वाधिकरणम् । सू ५ ।

भूम्नः क्रतुवज्ज्य स्त्वं तथाहि द र्यति ॥५ ॥

'प्राचीनशाल औपमन्यवः' इत्यस्यामाख्यायिकायां व्य तस्य समस्तस्य च वैश्वानरस्योपासनं श्रूयते । व्यस्तोपासनं तावत् 'औपमन्यव कं त्वमात्मानमुपास इति दिवमेव भगवो राजन्निति होवाचैष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मानमुपास्से' इत्यादि । त । स्तोपासनमपि 'तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा देहो बहुलो बस्तिरेव रयिः पृथिव्येव पादौ' इत्यादि । त्र संशयः— किमिह उभयथाप्युपासनं स्याद्यस्तस्य मस्तस्य च, उत स्तस्यैवेति । किं तावत्प्राप्तम्? प्रत्यवयवं सुतेजःप्रभृतिषु उपास्स इति क्रियापदश्रवणात् 'तस्मात्तव सुतं सुतमासुतं कुले दृश्यते' इत्यादिफलभेदश्रवणाच्च व्य ा-न्यप्युपासनानि स्युरिति प्राप्तम् ॥

ततोऽभिधीयते— भूम्नः पदार्थोपचयात्मकस मस्तस्य वैश्वानरोपा नस्य ज्यायस्त्वं प्राधान्येन अस्मिन्वाक्ये विवक्षितं भवितुमर्हति, न प्रत्येकमवयवोपासनानामपि । क्रतुवत् । यथा क्रतुषु दर्शपूर्ण ासप्रभृतिषु सामस्त्येन सांगप्र ानप्रयो एवैको विवक्ष्यते, न व्यस्तानामपि प्रयोगः प्रया-ादीना , नाप्येकदेशांगयुक्तस्य प्रधानस्य, तद्वत् । कुत एतत् भूमैव ज्यायानिति? तथाहि श्रुतिः भूम्नो ज्यायस्त्वं दर्शयति, एकवाक्यतावगमात्। एकं हीदं वाक्यं वैश्वानरविद्याविषयं पौर्वापर्यालोचनात्प्रतीयते । तथाहि प्राचीनशालप्रभृतय उद्दालकावसानाः षड्ऋषयो वैश्वानरविद्यायां परिनिष्ठां अप्रतिपद्यमाना अश्वपतिं कैकेयं राजानमभ्याजग्मुः इत्युपक्रम्य, एकैकस्यर्षेः उपास्यं द्युप्रभृतीनामेकैकं श्रावयित्वा 'मूर्धा त्वेष आत्मन इति होवाच' इत्यादिना मूर्धादिभावं तेषां विदधाति । मूर्धा ते व्यपतिष्यद्यन्मां नागमिष्यः' इत्यादिना च व्यस्तोपासनमपवदाति । पुनश्च व्यस्तोपासनं व्यावर्त्य ोपा नमेवानुवर्त्य ' सर्वेषु लोकेषु सर्वेषु भूते सर्वेष्वात्मस्वन्नमत्ति'

इति भूमाश्रयमेव फलं दर्शयति । यत्तु प्रत्येकं सुतेजःप्रभृतिषु भेदश्रवणं, तदेवं सति अंग ानि प्रधान एवाभ्युपगतानीति द्रष्टव्यम् । या 'उपास्से' इत्यपि प्रत्ययवयमाख्यातश्रवणं पराभिप्रायानुवादार्थं, न व्यस्तोपासनविधानार्थम् । तस्मात्समस्तोपासनपक्ष एव श्रेयानिति ॥

केचित्त्वत्र मस्तोपासनपक्षं ज्यायांसं प्रतिष्ठाप्य, ज्यायस्त्ववचनादेव किल व्यस्तोपासनपक्षमपि सूत्रकारोऽनुमन्यत इति कथयन्ति । तदयुक्तम् । एकवाक्यतावग ौ त्यां वाक्यभेदकल्पनस्यान्याय्यत्वात् । 'मूर्धा ते व्यपतिष्यत्' इति चैवमादिर्निंदावचनविरोधात् । स्पष्टे चोपसंहारस्थे समस्तोपासनावगमे तदभावस्य पूर्वपक्षे वक्तुमशक्यत्वात् । सौत्रस्य च ज्यायस्त्ववचनस्य प्रमाणवत्त्वाभिप्रायेणाप्युपपद्यमानत्वात् ॥५७॥

### ३३ ब्दादिभेदाधिकरणम् । सू० ५८ ।

### नाना शब्दादिभेदात् ॥५८॥

पूर्वस्मिन्नधिकरणे सत्यामपि सुतेजःप्रभृतीनां फलभेदश्रुतौ मस्तोपा नं ज्याय इत्युक्तम् । अतः ाता बुद्धिः अन्यान्यपि भिन्नश्रुतीन्युपासनानि समस्योपाशिष्यन्त इति । अपिच नैव वेद्याभेदे विद्याभेदो विज्ञातुं शक्यते । वेद्यं हि रूपं विद्यायाः, द्रव्यदैवतमिव या स्य । वेद्यश्चैक एवेश्वरः श्रुतिनानात्वेऽप्यवगम्यते 'मनोमयः प्राणशरीरः' 'कं ब्रह्म खं ब्रह्म' ' त्यकामः सत्य ल्पः' इत्येवमादिषु । तथा 'एक एव प्राणः' 'प्राणो वाव वर्गः' 'प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च' 'प्राणो ह पिता प्राणो माता' इत्येवमादिषु । वेद्यैकत्वाच्च विद्यैकत्वम् । श्रुतिनानात्वमप्यस्मिन्पक्षे गुणान्तरपरत्वान्ना र्थकम् । तस्मात्स्वपरशाखाविहितं एकवेद्यव्यपाश्रयं गुणजा मुप हर्तव्यं विद्याकात्स्न्यायेति । एवं प्राप्ते प्रतिपाद्यते नानेति । वेद्याभेदेऽप्येवंजातीयका विद्या भिन्ना भवितुमर्हति । कुतः? शब्दादिभेदात् । भवति हि शब्दभेदः 'वेद' 'उपासीत' 'स क्रतुं कुर्वीत' इत्येवमादिः । शब्दभेदश्च कर्मभेदहेतुः समधिगतः पुरस्तात् 'शब्दान्तरे कर्मभेदः कृतानु धत्वा ' इति । आदिग्रहणात् गुणादयोऽपि यथा भवं भेदहे वो योजयितव्याः । ननु वेद इत्यादिषु शब्दभेद एवावगम्यते, न यजतीत्यादिवदर्थभेदः, सर्वेषामेवैषां मनोवृत्त्यर्थत्वाभेदात् अर्थान्तरा भवाच्च । तत्कथं शब्दभेदाद्विद्याभेद इति

नैष दोषः। मनोवृत्त्यर्थत्वाभेदेऽप्यनुबंधभेदाद्वेद्यभेदे सति विद्याभेदोपपत्तेः। एकस्यापीश्वरस्योपास्यस्य प्रतिप्रकरणं व्यावृत्ता गुणाः शिष्यन्ते। तथैकस्यापि प्राणस्य तत्र तत्रोपास्यस्य अभेदेऽप्यन्यादृग्गुणोऽन्यत्रोपासितव्योऽन्यादृग्गुणश्चान्यत्र इत्येवमनुबंधभेदाद्वे भेदे सति विद्याभेदो विज्ञायते। नचात्रैको विद्याविधिरितरे गुणविधय इति शक्यं वक्तुम्। विनिगमनायां हेत्वभावात्। अनेकत्वाच्च प्रतिप्रकरणं गुणानां प्राप्तविद्यानुवादेन विधानानुपपत्तेः। नचास्मिन्पक्षे समानाः स[न्तः] सत्यकामादयो गुणा अ[स]कृच्छ्रावयि[त]व्याः। प्रतिप्रकरणं च इदंकामेनेदमुपासितव्यं, इदंकामेन चेदं, इति नैराकांक्ष्यावगमान्नैकवाक्यतापत्तिः। नचात्र वैश्वानरविद्यायामिव समस्तचोदनापरास्ति, यद्बलेन प्रतिप्रकरणवर्तीन्यवयवोपासनानि भूत्वैकवाक्यतामियुः। वेद्यैकत्वनिमित्ते च विद्यैकत्वे सर्वत्र निरंकुशे प्रतिज्ञायमाने [स]मस्तगुणोपसंहारोऽशक्यः प्रतिज्ञायेत। तस्मात्सुष्ठूच्यते नाना शब्दादिभेदादिति। स्थिते चैतस्मि[न्न]धिकरणे सर्ववेदान्तप्रत्ययमित्यादि द्रष्टव्यम् ॥५८॥

### ३४ विकल्पाधिकरणम्। सू० ५९।

विकल्पोऽविशिष्टफलत्वात् ॥५९॥

स्थिते विद्याभेदे विचार्यते किमासामिच्छया समुच्चयो विकल्पो वा स्यात्, अथवा विकल्प एव नियमेनेति। तत्र स्थितत्वात्तावद्विद्याभेदस्य न समुच्चयानियमे किंचित्कारणमस्ति। ननु भिन्नानामप्यग्निहोत्रदर्शपूर्णमासादीनां समुच्चयनियमो दृश्यते। नैष दोषः। नित्यताश्रुतिर्हि तत्र कारणम्। नैवं विद्यानां काचिन्नित्यताश्रुतिरस्ति। तस्मान्न समुच्चयनियमः। नापि विकल्पनियमः। विद्यान्तराधिकृतस्य विद्यान्तराप्रतिषेधात्। पारिशेष्याद्याथाकाम्यमापद्यते। ननु अविशिष्टफलत्वादासां विकल्पो न्याय्यः। तथाहि— 'मनोमयः प्राणशरीरः' 'कं ब्रह्म खं ब्रह्म' 'सत्यकामः सत्यसंकल्पः' इत्येवमाद्याः तुल्यवदीश्वरप्राप्तिफला लक्ष्यन्ते। नैष दोषः। मानफलेष्वपि स्वर्गादिसाधनेषु कर्मसु याथाकाम्यदर्शनात्। तस्माद्याथाकाम्यप्राप्तौ उच्यते— विकल्प एवासां भवितुमर्हति, न समुच्चयः। कस्मात्? अविशिष्टफलत्वात्। अविशिष्टं ह्यासां फलमुपास्यविषयसाक्षात्करणम्। एकेन चोपासनेन साक्षात्कृते उपास्ये विषये ईश्वरादौ द्वि[ती]यमनर्थकम्।

अपि चासंभवः एव । ाक्षात्करणस्य समुच्चयपक्षे चित्तविक्षेपहेतुत्वात् । ाक्षात्करण ाध्यं च विद्याफलं दर्शयन्ति श्रुतयः 'यस्य स्यादद्धा न विचिकि ास्ति' इति, 'देवो भूत्वा देवानप्येति' इति चैवमाद्याः । स्मृतयश्च "सदा द्भावभावितः" इत्येवमाद्याः । तस्मादविशिष्टफलानां विद्यानामन्यतमामादाय तत्परः स्यात् यावदुपास्यविषय ाक्षात्करणेन तत्फलं प्राप्तमिति ॥

**३५ काम्याधिकरणम् । सू० ६० ।**

**काम्यास्तु य कामं समुच्चीयेर वा पूर्वहेत्वभावात् ॥६०॥**

अविशिष्टफलत्वादित्यस्य प्रत्युदाहरणम् । यासु पुनः काम्यासु विद्या ' य एतमेवं वायुं दिशां वत्सं वेद न पुत्ररोदं रोदिति' 'स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति' इति चैवमाद्यासु क्रियावददृष्टेनात्मना आत्मीयं फलं साधयन्तीषु साक्षात्करणापे नारि । ता यथाकामं समुच्चीयेरन्न वा समुच्चीयेरन्पूर्वहेत्वभावात् । पूर्वस्याविशिष्टफलत्वादित्यस्य विकल्पहेतोरभावात् ॥६०॥

**३६ य श्रयभावाधिकरणम् । सू० ६१–६६ ।**

**अंगेषु यथाश्रयभावः ॥६ ॥**

कर्मांगेषूद्गीथादिषु ये आश्रिताः प्रत्यया वेदत्रयविहिताः किं ते समुच्चीयेरन्किंवा यथाकामं स्युरिति ंशये यथाश्रयभाव इत्याह । यथैवैषामाश्रयाः स्तोत्रादयः संभूय भवन्त्येवं प्रत्यया अपि, आश्रयतंत्रत्वात्प्रत्ययानाम् ॥

**शिष्टेश्च ॥६२।**

यथा वा याः स्तोत्रादयस्त्रिषु शिष्यन्ते एवमाश्रिता अपि त्ययाः । नोपदेशकृ ोऽपि श्चिद्विशेषोंऽगानां तदाश्रयाणां प्रत्ययानामित्यर्थः॥६२

**ाहारात् ॥६३॥**

'होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरति' इति च प्रणवोद्गीथैकत्वशानमाहात्म्यादुद्गाता स्वकर्मण्युत्प ं क्षतं हौत्रात्कर्मणः प्रतिसमादधातीति ब्रुवन्वेदान्तरोदितस्य प्रत्ययस्य वेदान्तरोदि पदार्थसं ंधसामान्यात्सर्ववेदोदिप्रत्ययोपसंहारं सूचयतीति लिंगदर्शनम् ॥६३॥

**गुणसाधार श्रुतेश्च ॥६४॥**

विद्यागुणं च विद्या ं सन्तमों ारं वेदत्रयसाधारणं श्रावयति

'तेनेयं त्रयी विद्या वर्तत ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायति' इति च। ततश्चाश्रयसाधारण्यादाश्रित ाधारण्यमिति लिंगदर्शनमेव। अथवा गुण ाधारण्यश्रुतेश्चेति। यदीमे कर्मगुणा उद्गीथादयः सर्वे र्वप्रयोगसाधारणा न स्युः न स्यात्ततस्तदाश्रयाणां प्रत्ययानां सहभावः। ते तूद्गीथादयः सर्वांगग्राहिणा प्रयोगवचनेन सर्वे र्वप्रयोगसाधारणाः श्राव्यन्ते। ततश्चाश्रयसहभावात्प्रत्ययसहभाव इति ॥६४॥

## वा तत्सहभावाश्रुतेः ॥६५॥

न वेति पक्षव्याव र्तनम्। न यथाश्रयभाव आश्रितानामुपा नानां भवितुमर्हति। कुतः? तत्सहभावाश्रुतेः। यथाहि त्रिवेदीविहितानामंगानां स्तोत्रादीनां सहभावः श्रूयते "ग्रहं वा गृहीत्वा चम ं वोन्नीय स्तोत्रमुपाकरोति स्तोत्रमनुशंसति प्रस्तोतः साम गाय होतरेतद्य" इत्यादिना। नैवमुपासनानां हभावश्रुतिरस्ति। ननु प्रयोगवचनः एषां सहभावं प्रापयेत्। नेति ब्रूमः। पुरुषार्थत्वादुपासनानाम्। प्रयोगवचनो हि क्रत्वर्थानामुद्गीथादीनां सहभावं प्रापयेत्। उद्गीथाद्युपासनानि तु क्रत्वर्थाश्रयाण्यपि गोदोहनादिवत्पुरुषार्थानीत्यवोचाम 'पृथग्घ्यप्रतिबंधः फलम्' [३.३.४२] इत्यत्र। अयमेव चोपदेशाश्रयो विशेषोऽगानां तदालंबनानां चोपासनानां यदेकेषां क्रत्वर्थत्वं एकेषां पुरुषार्थत्वमिति। परं च लिंगद्वयमकारणमुपासनसहभावस्य श्रुतिन्यायाभावात्। नच प्रतिप्रयोगं आश्रयकार्त्स्न्योपसंहारादाश्रितानामपि तथात्वं विज्ञातुं क्यम्। अतत्प्रयुक्तत्वादुपासनानाम्। आश्रयतंत्राण्यपि ह्युपासनानि काममाश्रयाभावे मा भूवन्न त्वाश्रयसहभावेन हभावानियममर्हन्ति, तत्सहभावाश्रुतेरेव। तस्माद्यथाकाममेव उपासनान्यनुष्ठीयेरन् ॥६५॥

## दर्शनाच्च ॥६६॥

दर्शयति च श्रुतिरसहभावं प्रत्ययानाम्— 'एवंविद्ध वै ब्रह्मा यज्ञं यजमानं र्वाश्चर्त्विजोऽभिरक्षति' इति। र्वप्रत्ययोपसंहारे हि सर्वे 'विदः' इति न विज्ञानवता ब्रह्मणा परिपाल्यत्वमितरेषां संकीर्त्येत। स्माद्यथाकाममुपासनानां समुच्चयो विकल्पो वेति ॥६६॥

इति श्रीगोविंदभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ शारीरकमीमांसाभाष्ये तृतीयाध्या स्य तृतीयः पादः ॥

इति। उच्यते अयमात्मशब्दो मुख्यः शक्यतेऽभ्युपगंतुं, सति जीवेश्वरयोरभेदसंभवे। इतर। गौणोऽयमभ्युपगंतव्यः इति मन्यते। किं ता त्प्राप्तं? नाहमिति ग्राह्यः। नहि अपहतपाप्मत्वादिगुणो विपरीतगुणत्वेन क्यते ग्रहीतुं विपरीतगुणो वा अपहतपाप्मत्वादिगुणत्वेन। अपहतपाप्मादिगुणश्च परमेश्वरः द्विपरीतगुणस्तु शारीरः। ईश्वरस्य च सार्यात्मत्वे ईश्वराभावप्रसंगः। ततः स्त्रानर्थक्यम्। संसारिणोऽपीश्वरात्मत्वे अधिकार्यभावाच्छास्त्रानर्थक्यमेव। प्रत्यक्षादिविरोधश्च। अन्यत्वेऽपि तादात्म्यदर्शनं शास्त्रात्कर्तव्यं प्रतिमादिष्विव विष्ण्वादिदर्शनमिति चेत्काममेवं भवतु। नतु संसारिणो मुख्य आत्मेश्वर इत्येतन्नः प्रापयितव्यम्॥

एवं प्राप्ते ब्रूमः— आत्मेत्येव परमेश्वरः प्रतिपत्तव्यः। तथाहि परमेश्वरप्राक्रियायां जाबाला आत्मत्वेनैव ए मुपगच्छन्ति— "त्वं वा अहमस्मि भगवो देवतेऽहं वै त्वमसि भगवो देवते" इति। तथान्येऽपि 'अहं ब्रह्मास्मि' इत्येवमादयः आत्मत्वोपगमा द्रष्टव्याः। ग्राहयन्ति चात्मत्वेनैवेश्वरं वेदान्तवाक्यानि 'एष त आत्मा र्वान्तरः' 'एष त आत्माऽन्तर्याम्यमृतः' 'तत्सत्यं आत्मा तत्त्वमसि' इत्येवमादीनि। यदुक्तं प्रतीकदर्शनमिदं विष्णुप्रतिमान्यायेन भविष्यतीति, तदयुक्तम्। गौणत्वप्रसंगात्। वाक्यवैरूप्याच्च। यत्र हि प्रतीकदृष्टिरभिप्रेयते, सकृदेव तत्र वचनं भवति यथा 'मनो ब्रह्म' 'आदित्यो ब्रह्म' इत्यादि। इह पुनः त्वमहमस्म्यहं च त्वमसीत्याह। अतः प्रतीकश्रुतिवैरूप्यादभेदप्रतिपत्तिः। भेददृष्ट्यपवादाच्च। तथाहि 'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद' 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' ' वै तं परादाद्योऽन्यत्रात्मनः सर्वं वेद' इत्येवमाद्या भूयसी श्रुतिर्भेददर्शनमपवदति। यत्तूक्तं न विरुद्धगुणयोः अन्योन्यात्मत्व भव इति। नायं दोषः। विरुद्धगुणताया मिथ्यात्वोपपत्तेः। यत्पुनरुक्तं, ईश्वराभावप्रसंग इति। तदसत्। शास्त्रप्रामाण्यात् अनभ्युपगमाच्च। नहीश्वरस्य र्यात्मत्वं प्रतिपाद्यते इत्यभ्युपगच्छामः। किं र्हि, सारिणः संसारित्वापोहेनेश्वरात्मत्वं प्रतिपिपादयिषितमिति। एवंच ति अद्वैतेश्वरस्य अपहतपाप्मत्वादिगुणता विपरीतगुणता त्वितरस्य मिथ्येति व्यवतिष्ठते। यदप्युक्तं अधिकार्यभावः प्रत्यक्षादिविरो-

धश्चेति । तदप्यसत् । प्राक्प्रबोधात्संसारित्वाभ्युपगमात् । तद्विषयत्वाच्च प्रत्यक्षादिव्यवहारस्य । 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन पश्येत्' इत्यादि । हि प्रबोधे प्रत्यक्षाद्यभावं दर्शयति । प्रत्यक्षाद्यभावे श्रुतेरप्यभावप्रसंग इति चेत् । न । इष्टत्वात् । अत्र 'पिताऽपिता भवति' इत्युपक्रम्य 'वेदा अवेदाः' इति वचनात् इष्यत एवास्माभिः श्रुतेरप्यभावः प्रबोधे । कस्य पुनरयमप्रबोध इति चेत् । यस्त्वं पृच्छसि तस्य ते, इति वदामः । नन्वहमीश्वर एवोक्तः श्रुत्या, यद्येवं प्रतिबुद्धोऽसि, नास्ति कस्यचिदप्रबोधः । योऽपि दोषश्चोद्यते कैश्चिदविद्यया किलात्मनः सद्वितीयत्वात् अद्वैतानुपपत्तिरिति, ोऽप्येतेन प्रत्युक्तः । स्मादात्मेत्येवेश्वरे मनो दधीत ॥३॥

३ प्रतीकाधिकरणम् । ू० ४ ।

न प्रतीके नहि ः ॥४॥

'मनो ब्रह्मेत्युपासीतेत्यध्यात्ममथाधिदैवतमाकाशो ब्रह्मेति' था 'आदित्यो ब्रह्मेत्यादेशः' 'स यो नाम ब्रह्मेत्युपास्ते' इत्येवमादिषु प्रतीकोपासनेषु शयः— किं तेष्वप्यात्मग्रहः क व्यो, न वेति । किं तावत्प्राप्त ? तेष्वप्यात्मग्रह एव युक्तः कर्तुम् । कस्मात्? ब्रह्मणः श्रुतिष्वात्मत्वेन प्रि- द्धत्वात् प्रतीकानामपि ब्रह्मविकारत्वाद्ब्रह्मत्वे सत्यात्मत्वोपपत्तेरिति । एवं प्राप्ते ब्रूमः— न प्रतीकेष्वात्ममतिं बध्नीयात् । नहि उपासकः प्रतीकानि व्यस्तान्यात्मत्वेनाकलयेत् । यत्पुनर्ब्रह्मविकारत्वात्प्रतीकानां ब्रह्मत्वं तश्चात्मत्वमिति । तदसत् । प्रतीकाभावप्रसंगा । विकारस्वरूपोपमर्देन हि नामादिजातस्य ब्रह्मत्वमेवाश्रितं भवति । स्वरूपोपमर्दे च नामादीनां कुतः प्रतीकत्वमात्मग्रहो वा ? नच ब्रह्मणः आत्मत्वाद्ब्रह्मदृष्ट्युपदेशेष्वात्मदृष्टिः कल्प्या । कर्तृत्वाद्यनिराकरणात् । कर्तृत्वादि र्वसंसारधर्मानिराकरणेन हि ब्रह्मणः आत्मत्वोपदेशः । तदनिराकरणेन चोपा नविधानम् । अतश्चोपासकस्य प्रतीकैः समत्वादात ग्रहो नोपपद्यते । नहि रुचक स्तिकयोः इतरे रात्मत्वमस्ि । सुवर्णात्मत्वेनेव ब्रह्मात्मत्वेनैकत्वे प्रतीकाभावप्रसंगमवोचाम । अतो न प्रतीकेष्वात्मदृष्टिः क्रिय ॥४॥

। सूू० ५ ।

ब्रह्मदृष्टिरुत्कर्षात् ॥५॥

तेष्वेवोदाहरणेष्वन्यः संशयः— किमादित्यादिदृष्टयो ब्रह्मण्यध्यासितव्याः, किंवा ब्रह्मदृष्टिरादित्यादिष्विति । कु : संशयः ? सामानाधिकरण्ये कारणान धारणात् । अत्र हि ब्रह्मशब्दस्यादित्यादिशब्दैः सामा ाधिकरण्यं उप भ्यते । 'आदित्यो ब्रह्म' 'प्राणो ब्रह्म' 'विद्युद्ब्रह्म' इत्यादिसमानविभक्तिनिर्देशात् । नचात्रांजसं ानाधिकरण्यमवकल्पते । अर्थान्तरवचनत्वाद्ब्र दित्यादिशब्दानाम् । नहि भवति गौरश्व इति सामानाधिकरण्यम् । नु प्रकृतिविकारभावाद्ब्रह्मादित्यादीनां मृच्छरावादिवत्सामानाधिकरण्यं स्यात् । नेत्युच्यते । विकारप्रविलयो ह्येवं प्रकृतिसामानाधिकरण्यात्स्यात् । तश्च प्रतीकाभावप्रसंगमवोचाम । परमात्मवाक्यं चेदं दानीं स्यात्ततश्चोपासनाधिकारो ाध्येत । परिमितविकारोपादानं च व्यर्थम् । तस्मात् 'ब्राह्मणोऽग्निर्वैश्वानरः' इत्यादिवदन्यत्रान्यदृष्टयध्यासे सति, किंदृष्टिरध्यस्यतामिति ंशयः । त्रानियमो, नियमकारिणः शास्त्रस्याभावादित्येवं प्राप्तम् । अथवा आदित्यादिदृष्टय एव ब्रह्मणि कर्तव्या इत्येवं प्राप्त । एवं ह्यादित्यादिदृष्टिभिर्ब्रह्मोपासितं भवति । ब्र ोपासनं च फलवदिति शास्त्रमर्यादा । मान्न ब्रह्मदृष्टिरादित्यादिष्विति । एवं प्राप्ते ब्रूमः— ब्रह्मदृ ेरेवादित्यादिषु स्यादिति । कस्मात् ? उत्कर्षात् । एवमुत्कर्षेणादित्यादयो दृष्टा भवन्ति । उत्कृष्टदृष्टेः ेष्वध्यासात् । तथाच लौ िको न्यायोऽनुगतो भवति। उत्कृष्टदृष्टिर्हि निकृष्टेऽध्या ्येति लौकिको न्यायः । यथा राजदृष्टिः क्षत्तरि। चानुसर्तव्यः । विपर्यये प्रत्यवायप्र ंगात् । नहि क्षत्तृदृष्टिपरिगृहीतो राजा निकर्षं नीयमानः श्रेयसे स्यात् । ननु शा प्रामाण्यादनाशंकनीयोऽत्र प्रत्यायप्रसंगो, नच लौकिकेन न्यायेन ा िया दृष्टिर्नियंतुं युक्तेि । अत्रोच्यते निर्धारिते शास्त्रार्थे एतदेवं स्यात् । संदिग्धे तु तस्मिंस्तन्निर्णयं प्रति लौकिकोऽपि न्याय आश्रीयमाणो न विरुध्यते । तेन चोत्कृष्टदृष्टयध्या े शास्त्रार्थेऽवधार्यमाणे निकृष्टदृष्टि ध्यस्यन्प्रत्यवेयादिति श्लिष्यते । प्राथम्याच्च आदित्यादिशब्दानां मुख्यार्थत्वमविरोधा ग्रहीतव्यम् । तैः स्वार्थवृत्तिभिरवरुद्धायां बुद्धौ पश्चादवतरतो ब्रह्मशब्दस्य मुख्यया वृत्त्या सामानाधिकरण्यासंभवात् ब्रह्मदृष्टिविधानार्थतैवावति ते । इतिपरत ादपि ब्रह्मशब्दस्यैष एवार्थो न्याय्यः । थाहि 'ब्रह्मेत्यादेशः', 'ब्रह्मेत्युपासीत', 'ब्रह्मेत्यु-

पास्ते' इति च सर्वत्रेतिपरं ब्रह्मशब्दमुच्चारयति, शुद्धांस्त्वादित्यादिशब्दान्। ततश्च यथा शुक्तिकां रजतमिति प्रत्येतीत्यत्र शुक्तिवचन एव शुक्तिकाशब्दो, रजतशब्दस्तु रजतप्रतीतिलक्षणार्थः। प्रत्येत्येव हि केवलं रजतमिति, नतु तत्र रजतमस्ति। एवमत्राप्यादित्यादीन्ब्रह्मेति प्रतीयादिति गम्यते। वाक्यशेषोऽपि च द्वितीयानिर्देशेन आदित्यादीनेव उपास्तिक्रियया व्याप्यमानान्दर्शयति— 'स य एतमेवं विद्वानादित्यं ब्रह्मेत्युपास्ते', 'यो वाचं ब्रह्मेत्युपास्ते' 'यः संकल्पं ब्रह्मेत्युपास्ते' इति च। यत्तूक्तं ब्रह्मोपासनमेवात्रादरणीयं फलवत्त्वायेति। तदयुक्तम्। उक्तेन न्यायेन आदित्यादीनामेवोपास्यत्वावगमात्। फलं त्वतिथ्याद्युपासन इव आदित्याद्युपा नेऽपि ब्रह्मैव दास्यति, सर्वाध्यक्षत्वात्। वर्णितं चैतत् 'फलमत उपपत्तेः' [३.२.३८] इत्यत्र। ईदृशं चात्र ब्रह्मण उपास्यत्वं यत्प्रतीकेषु दृष्ट्यध्यारोपणं, प्रतिमादिष्विव विष्ण्वादीनाम् ॥५॥

५ आदित्यादिमत्यधिकरणम्। सू० ६। various rit that we perform

आदित्यादिमतयश्चांग उपपत्तेः ॥६॥

'य एवा गौ तपति तमुद्गीथमुपासीत', 'लोकेषु पंचवि सामोपासीत', 'वाचि सप्तविधं सामोपासीत', 'इयमेवर्गग्निः ाम' त्येवमादिषु अंगावबद्धेषूपासनेषु संशयः—किमादित्यादिषूद्गीथादिदृष्टयो विधीयन्ते, किंवोद्गीथादिष्वेवादित्यादिदृष्टय इति। तत्रानियमो नियमकारणाभावादिति प्राप्तम्। नह्यत्र ब्रह्मण इव कस्यचिदुत्कर्षविशेषोऽव ते। ब्रह्म हि जगत्कारणत्वादपहतपाप्मत्वादिगुणयोगाच्च आदित्यादिभ्य उत्कृष्टमिति शक्यमवधारयितुम्। न त्वादित्योद्गीथादीनां विकारत्वाविशेषात्किंचिदुत्कर्षविशेषावधारणे कारणमस्ति। अथवा नियमेनैव उद्गीथादिमतय आदित्यादिष्वध्यस्येरन्। कस्मात्? कर्मात्मकत्वादुद्गीथादीनां, कर्मणश्च फलप्राप्तिप्रसिद्धेः उद्गीथादिमतिभिरुपास्यमाना आदित्यादयः त्मिकाः न्तः फलहेतवो भविष्यन्ति। तथाच 'इयमेवर्गग्निः साम' इत्यत्र 'देतदेतस्या ्यध्यूढं साम' इति ऋक्शब्देन पृथिवीं निर्दिशति, मशब्देनाग्निम्। तच्च पृथिव्यग्न्योः ऋक्सामदृष्टिचिकीर्षायामवकल्पते, न ऋक्सामयोः पृथिव्यग्नि ष्टिविकीर्षायाम्। क्षत्तरि हि राजदृष्टिकरणाद्राजशब्द उपचर्यते, न राजनि

(5)

क्षत्तृशब्दः । अपिच 'लोकेषु पंचविधं सामोपासीत' इत्यधिकरणनिर्देशाल्लोकेषु सामाध्यसितव्यमिति प्रतीयते । 'एतद्गायत्रं प्राणेषु प्रोतम्' इति चैतदेव दर्शयति । थमनिर्दिष्टेषु चादित्यादिषु रमनिर्दिष्टं ब्रह्माध्यस्तं 'आदित्यो ब्रह्मेत्यादेशः' इत्यादिषु । प्रथमनिर्दि श्च पृथिव्यादयः, चरमनिर्दि हिंकारादयः 'पृथिवी हिंकारः' इत्यादिश्रुतिषु । अतोऽनंगेष्वादित्यादिष्वंगमतिक्षेप इति । एवं ते मः— आदित्यादिमतय ए ंगेषूद्गी ादिषु क्षिप्येरन् । कुतः ? उपपत्तेः । उपपद्यते ह्येवं अपूर्व निकर्षादादित्यादिमतिभिः संस्क्रियमाणेषूद्गीथादिषु कर्मसमृद्धिः । 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इति च विद्यायाः कर्मसमृद्धिहेतुत्वं दर्शयति । भवतु कर्मसमृद्धिफलेष्वेवं, स्वतंत्रफलेषु कथं 'य एतदेवं विद्वांल्लोकेषु पंचवि सामोपास्ते' इत्यादिषु ? तेष प्याधिकृताधिकारात्प्रकृतापूर्वसंनिकर्षेणैव फलकल्प । युक्ता, गोदोहनादिनियमवत् । फलात्मकत्वाच्चादित्यादीनां उद्गीथादिभ्यः कर्मात्मकेभ्यः उत्कर्षोपपत्तिः । आदित्यादिप्र तिलक्षणं हि कर्मफ शिष्यते श्रुतिषु । अपिच 'ओमित्येतदक्षरमुद्गीथमुपासीत' 'खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति' इति चोद्गीथमेवोपास्यत्वेनोपक्रम्य, आदित्यादिमतीर्विदधाति । यत्तूक्तं उद्गीथादिमतिभिरुपास्यमाना आदित्यादयः कर्मभूयं भूत । फ करिष्यन्तीति । दयुक्तम् । स्वयमेवोपासनस्य कर्मत्वात्फलवत्त्वोपपत्तेः । आदित्यादिभावेनापि च दृश्यमानानामुद्गाथादीनां कर्मात्मकत्वानपायात् । । 'तदेतदेतस्यामृच्यध्यूढं साम' इति तु लाक्षणिक ए पृथिव्यग्न्योर्ऋक्सामशब्द यो : । लक्षणा च यथाभवं निकृष्टेन विप्रकृष्टेन वा स्वार्थसंबंधेन प्र र्तते । तत्र यद्यपि ऋक्सामयोः पृथिव्यग्निदृष्टिचिकीर्षा, तथापि प्रसिद्धयोर्ऋक्सामयोः भेदेनानुकीर्तनात्पृथिव्यग्न्यो निध ात्तयोरेवैष ऋक्सामशब्द योग ऋक्सा धादिति निश्चीयते । क्षत्तृशब्दोऽपि हि कु श्चित्कारणाद्राजानमुपसर्पन्न निवारयितुं पार्यते । 'इयमे क्' इति च य । रन्यासमृच ए पृथिवीत्वम धारयति । पृथिव्या हि वेऽवधार्यमाणे इयमृ ेवेत्यक्षरन्यासः स्यात् । 'य एवं वि द्वा- । याते' इ च गाश्रयमेव वि । मुप हरति, पृथिव्याद्या - यम् । । 'ोकेषु पंचविधं ामोपासीत' इति पि मीनिर्दिष्टा

लोकाः, तथापि साम्न्येव तेऽध्यस्येरन्द्वितीयानिर्देशेन उपास्यत्वावगमात्। साम्नि हि लोकेष्वध्यस्यमानेषु साम ोकात्मनोपासितं भवति। अन्यथा पुनर्लोकाः सामात्मनोपासिताः स्युः। एतेन 'एतद्गायत्रं प्राणेषु प्रोतम्' इत्यादि व्याख्यात ्। यत्रापि तुल्यो द्वितीयानिर्देशः 'अ खल्वमुमादित्यं तविधं सामोपासीत' इति, तत्रापि 'समस्तस्य खलु म्न उपासनं साधु' 'इति तु पंचविधस्य' 'अ सप्तविधस्य' इति च म्न एवोपास्यत्वोपक्रमात्तस्मिन्नेव आदित्याद्यध्यासः। एतस्मादेव च साम्न उपास्यत्वावगमात् 'पृथिवी हिंकारः' इत्यादिनिर्देशविपर्ययेऽपि हिं ारादिष्वेव पृथिव्यादिदृष्टिः। तस्मादनंगाश्रया आदित्यादिमतयः अंगेषूद्गीथादिषु क्षिप्येरन्निति सिद्धम् ॥६॥

६ आसीनाधिकरणम्। सू० –१०।

अ ीनः भवा ् ॥ ॥

कर्मांगसंबद्धेषु तावदुपासनेषु कर्मतंत्रत्वान्नासनादिचिंता। नापि सम्यग्दर्शने। वस्तुतंत्रत्वाद्विज्ञानस्य। इतरेषु तूपा नेषु किमनियमेन तिष्ठन्नासीनः शयानो वा प्रवर्तेत, उत नियमेना ीन एवेति चिंतयति। त्र मानसत्वादुपासनस्यानियमः शरीरस्थितेरि । एवं प्राप्ते ब्रवीति— आ ीन एवोपासीतेति। कुतः? भवात्। उपासनं नाम समानप्रत्ययप्रवाहकरणम्। नच द्गच्छतो धावतो वा भवति, गत्यादीनां चित्तविक्षेपकत्वात्। तिष्ठतोऽपि देहधारणे व्यापृतं मनो न सूक्ष्मवस्तुनिरीक्षणक्षमं भवति। शयानस्याप्यकस्मादेव निद्रयाभिभूयेत। आ ीनस्य त्वेवं ातीयको भूयान्दोषः सुपरिहर इति भवति तस्योपासन ्॥७॥

ध्यान ॥८॥

अपिच ध्यायत्यर्थ एषः, यत्समानप्रत्ययप्रवाहकरण ्। ध्यायतिश्च प्रशिथिलांगचेष्टेषु प्रतिष्ठितदृष्टिषु एकविषयाक्षिप्तचित्तेषूपचर्यमाणो दृश्य ध्यायति बको, ध्यायति प्रोषितबंधुरिति। आसीनश्चानायासो भवति। तस्मादप्यासीनकर्मोपा नम् ॥८॥

अचलत्वं चापेक्ष्य ॥९॥

अपिच 'ध्यायतीव थिवी' इत्यत्र पृथिव्यादि अचलत्वमेवापेक्ष्य

ध्यायतिवादो भवति । लिंगमुपा नस्यासीनकर्मत्वे ॥९॥

**स्मरन्ति च ॥ ०॥**

स्मरन्त्यपि च शि उपासनांगत्वेना नं "शुचौ देशे ति प्य स्थिरमासनमात्मनः" इत्यादिना । अतएव पद्मकादीनामासनविशेषाणां उपदेशो योगशा ॥१०॥

**७ एकाग्रताधिकरणम् । सू० १ ।**

**यत्रैकाग्रता तत्राविशेषात् ॥१ ॥**

दिग्देशकालेषु संशयः— किमस्ति कश्चिन्नियमो नास्ति वेति । प्रायेण वैदिकेष्वारंभेषु दिगादिनियमदर्शनात्स्यादिहापि कश्चिन्नियम इति यस्य मतिः, प्रत्याह दिग्देशकालेष्वर्थलक्षण एव नियमः । यत्रैवास्य दिशि देशे काले वा मन : ौकर्येणैकाग्रता भवति त्रैवोपा ीत प्राचीदिक्पूर्वाह्णप्राचीनप्रवणादिवद्विशेषाश्रवणात् । एकाग्रताया इष्टायाः त्राविशेषात् । ननु विशेषमपि केचिदामनन्ति "समे शुचौ शर्करावा वालुकाविवर्जिते शब्दजलाश्रयादिभिः । मनोनुकूले नतु चक्षुपीडने गुहानिवाता - णे प्रयोजयेत्" इति यथेति । उच्यते— त्यमस्त्येवंजातीयको नियमः । सति त्वेतस्मिंस्तद्गतेषु विशेषेष्वनियम इति सुहृद्भूत्वाचार्य आचष्टे । "मनोनुकूले" इति चैषा श्रुतिर्यत्रैकाग्र । तत्रैव इत्येतदेव दर्शयति ॥११॥

**८ आप्रायणाधिकरणम् । सू० २ ।**

**आ प्रायणात्तत्रापि हि दृष्टम् ॥१२॥**

आवृत्तिः वोपा नेष्वादर्तव्येति स्थितमाद्येऽधिकरणे । तत्र यानि तावत्सम्यग्दर्शनार्थान्युपासनानि, तान्यवघातादिवत्कार्यपर्यवसाना ीति ज्ञातमेवैषामावृत्तिपरिमाण । नहि सम्यग्दर्शने कार्ये निष्पन्ने यत्नान्तरं किंचिच्छा तुं शक्यम् । अनियोज्यब्रह्मात्मत्वप्रतिपत्तेः शा स्याविषयत्वात् । यानि पुनरभ्युदयफलानि तेष्वेषा चिंता किं कियन्तंचित्कालं प्रत्ययमावर्त्योपरमेत् उत ावजीवमावर्तयेदिति । किं तावत्प्राप्तम् ? कियन्तंचित्कालं प्रत्ययमभ्यस्योत्सृजेत् आवृत्तिविशिष्टस्योपा शब्दार्थस्य कृतत्वादिति । एवं प्राप्ते ब्रूम :—आ प्रायणादेवावर्तयेत्प्रत्ययम् । अंत्यप्रत्ययवशाददृष्टफलप्रा ः। कर्माण्यपि हि जन्मान्तरोपभोग्यं फलमारभमाणानि तदनुरूपं भा नाविज्ञानं

प्रायणकाले आक्षि न्ति, 'सविज्ञानो भवति वि ानमेवान्ववक्रामति' 'यच्चित्तस्तेनैष प्राणमायाति, प्राणस्ते ा युक्तः ात्मना यथासंकल्पितं लोकं नयति' इति चैवमादिश्रुतिभ्यः। तृ जलूकानिदर्शना । प्रत्ययास्त्वेते स्वरूपानुवृत्तिं मुक्त्वा किमन्यत्प्रायणकालभावि भावनाविज्ञान पेक्षेरन्। तस्माद्ये प्रतिपत्तव्यफलभावनात्मकाः प्रत्ययाः, ेष्वा प्रायणादावृत्तिः। थाच श्रुतिः ' यावत्क्रतुरयमस्माल्लोकात्प्रैति' इति प्रायणकालेऽपि प्रत्ययानुवृत्तिं दर्शयति। स्मृतिरपि— "यं यं वाऽपि स्मरन्भावं त्य त्यंते कलेवरम्। तं तमेवैति कौन्तेय सदा द्भावभावितः" इति, "प्रयाणकाले मनसाऽचलेन" इति च। 'सोऽन्तवेलायामेतत्त्रयं प्रतिपद्ये ' इति च मरणवेलायामपि कर्तव्यशेषं श्रावयति ॥१२॥

९ तदधिगमाधिकरणम्। सू० ३।

**तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ यपदेशात्॥ ३॥**

गतस्तृतीयशेषः। अथेदानीं ब्रह्मविद्या ' प्रा चिंता ायते। ब्रह्माधिगमे ति द्विपरीतफलं दुरितं क्षीयते न क्षीयते वेति संशयः। किं तावत्प्राप्तम्? फलार्थत्वात्कर्मणः फलमदत्वा न ंभाव्यते क्षयः। फलदायिनी ह्यस्य शक्तिः श्रुत्या मधिगता। यदि तदंतरेणैव फ ोपभोगमपवृज्येत श्रुतिः कदर्थिता स्यात्। स्मरन्ति च "नहि र्म क्षीयते" इ ि। नन्वेवं ति प्रायश्चित्तोपदेशोऽनर्थकः प्राप्नोति। नैष दोषः। प्रायश्चित्तानां नैमित्तिकत्वोपपत्तेर्गृहदाहे यादिवत्। अपिच प्रायश्चित्तानां दोषसंयोगेन विधानाद्भवेदपि दोषक्षपणार्थता। नत्वेवं ब्रह्मविद्यायां विधानमस्ति। नन्वनभ्युपगम्यमाने ब्रह्मविदः कर्मक्षये त्फलस्या श्यंभोक्तव्यत्वादनिर्मो ः स्यात्। नेत्युच्यते। देशकालनिमित्तापे ो मोक्षः कर्मफलवद्भविष्यति। तस्मान्न ब्रह्माधिगमे दुरितनिवृत्तिरिति। एवं प्राप्ते ब्रूमः— तदधिगमे ह्माधिगमे सति उत्तरपूर्वयोरघयोः अश्लेषविनाशौ भवतः। उत्तरस्याश्लेषः पूर्वस्य विना ः। कस्मात्? तद्व्यपदेशात्। हि ब्रह्मविद्याप्रक्रियायां ंभाव्यमानसंबंधस्य आगामिनो दुरितस्यानभिसं धं विदुषो व्यपदिशति— 'यथा पुष्करपलाश ापो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते' इति। था विनाशमपि पूर्वोपचितस्य दुरितस्य व्यपदिशति ' थेषी-

कातूलमग्नौ ` ' प्रदूयेतै ' हास्य वें पाप्मानः प्रदूयन्ते' इति । अयमपरः कर्मक्षयव्यपदेशो भवति— 'भिद्यते हृदयग्रंथिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तास्मिन्दृष्टे परावरे' इति । यदुक्तं अनुपभुक्तफलस्य कर्मणः क्षयकल्पना ां शा ' कदर्थि ' स्यादिरि । नैष दोषः । नहि वयं कर्मणः फलदायिनीं शक्तिमवजानीमहे, विद्यत एव सा, ा तु विद्यादिना कारणान्तरेण प्रतिबध इति वदा ः । शक्तिसद्भावमात्रे च ' व्याप्रियते, न प्रतिबंधाप्रतिबंधयोरपि । "नहि कर्म क्षीयते" इत्येतदपि स्मरणं औत्सर्गिकम् । न भोगादृते कर्म क्षीयते तदर्थत्वादिति । इष्यत ए तु प्रायश्चित्तादिना तस्य क्षयः 'सर्वं पाप्मानं तरति' "तरति हत्यां योऽश्वमेधे यजते य उ चैनमेवं वेद" इत्यादि श्रुतिस्मृतिभ्यः । यत्तूक्तं नैमित्तिकानि प्रायश्चित्तानि भविष्यन्तीति । तद त् । दोषसंयोगेन चोद्यमानानां एषां दोषनिर्घातफल भवे फलान्तरकल्पनानुपपत्तेः । यत्पुनरे दुक्तं न प्रायाश्चित्तवद्दोषक्षयोद्देशेन विद्याविधानमस्तीति । अत्र ब्रूमः सगुणासु ा द्विद्यासु विद्यत एव विधानम् । तासु च ाक्यशेषे ऐश्वर्यप्राप्तिः पापनिवृत्तिश्च विद्यावत उच्यते । तयोश्चाविव कारणं नार ित्यतः पाप्मप्रहाणपूर्वकैश्वर्यप्राप्तिर । ां फलमिति निश्चीयते । निर्गुणायां तु विद्यायां यद्यपि विधानं नास्ति, थाप्यकर्त्रात्मत्वबोधात्कर्मप्रदाहसिद्धिः । अश्लेष इति चागामिषु कर्मसु कर्तृत्वमेव न प्रतिपद्यते ब्रह्मविदिति दर्शयति । अतिक्रान्तेषु तु यद्यपि मिथ्याज्ञानात ृत्वं प्रतिपेद इव, तथापि विद्यासा र्थ्यान्मिथ्याज्ञाननिवृत्तेः ान्यपि प्रविलीयन्त इत्याह ि ना इति । पूर्वसिद्धकर्तृत्वभोक्तृत ाविपरीतं हि त्रिष्वपि कालेष्वकर्तृत्वाभोक्तृत्वस्वरूपं ब्रह्माहमस्मि, ने ः पूर्वमपि कर्ता भोक्ता वाहमासं, नेदानीं, नापि भवि त्का , इति ब्रह्मविदवगच्छति । एवमेव च मोक्ष उपपद्यते । अन्यथा ादिकालप्रवृत्तानां ं ां याभावे मोक्षाभा ः स्यात् । नच देशकालनिमित्तापेक्षो मोक्षः कर्म लवद्भवितुमर्हति । अनित्यत्वप्रसंगात् । परोक्षत्वानुपपत्तेश्च शा फलस्य । तस्माद्ब्रह्माधिगमे दुरितक्षय इति स्थितम् ॥१३॥

**इतरासंश्लेषाधिकरणम् । सू ।**

**इतरस्याप्येवमसंश्ले ः ॥ ॥**

पूर्वस्मिन्नधिकरणे बंधहेतोरघस्य स्वाभाविकस्याश्लेषविनाशौ ज्ञाननिमित्तौ शास्त्रव्यपदेशान्निरूपितौ। धर्मस्य पुनः शास्त्रीयत्वाच्छा ियेण ज्ञानेनाविरोध इत्याशंक्य तन्निराकरणाय पूर्वाधिकरणन्यायातिदेशः क्रिय । इतरस्यापि पुण्यस्य कर्मणः एवमघवदसंश्लेषो विना श्च ज्ञा तो भव :। कुतः? तस्यापि स्वफलहेतुत्वेन ज्ञानफल तिबंधित्वप्रसं ात्। 'उभे उ हैवैष एते तरति' इत्यादिश्रुतिषु च दुष्कृतवत्सुकृतस्यापि व्यपदेशात्। अकर्त्रात्मत्वबोधनिमि त्तस्य च कर्मक्षयस्य सुकृतदुष्कृतयोस्तुल्यत्वात् 'क्षीयन्ते चास्य कर्माणि' इति चाविशेषश्रुतेः। यत्रापि केवल ए पाप्मशब्दो दृश्यते, त्रापि तेनैव पुण्यमप्याकलितमिति द्रष्टव्यम्। ज्ञानफ ापेक्षया निकृ फलत्वात्। अस्ति च श्रुतौ पुण्येऽपि पाप्मशब्दः 'नैनं सेतुमहोरात्रे तर :' इत्यत्र ह दुष्कृतेन सुकृतमप्यनुक्रम्य ' वें पाप्मानोऽतो निव न्ते' इत्यविशेषेणैव प्रकृते पुण्ये पाप्मशब्दप्रयोगात्। 'पाते ' इति तु-शब्दोऽवधारणार्थः। एवं र्माधर्मयोर्बंधहेत्वोर्विद्यासामर्थ्यादश्लेषविना ा द्धेः अवश्यंभाविनी विदुषः शरीरपाते मुक्तिरित्यवधारयति ॥१४॥

१ अनारब्धाधिकरणम्। सू० १५।

अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥१५॥

पूर्वयोरधिकरणयोः ज्ञाननिमित्तः सुकृतदुष्कृतयोर्विनाशोऽवधारितः। स किमविशेषेण आरब्धकार्ययोरनारब्धकार्ययोश्च भवति, उ विशेषेणानारब्धकार्ययोरेवेति विचार्यते। तत्र 'उभे उ हैवैष एते तरति' इत्येवमादिश्रुतिषु अविशेषश्रवणादविशेषेणैव क्षय इति। एवं प्राप्ते त्याह अनारब्धकार्ये एव त्विति। अप्रवृत्तफले एव पूर्वे जन्मान्तरसंचिते, अस्मिन्नपि च जन्मनि प्राग्ज्ञानोत्पत्तेः संचिते, सुकृतदुष्कृते ज्ञानाधिगमात् ीयेते। नत्वारब्धकार्ये ामिभुक्तफले, याभ्यामेतद्ब्रह्मज्ञानायतनं जन्म निर्मितम्। कुत एतत्? 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' इति शरीरपातावधिकरणात्क्षेमप्राप्तेः। इतरथा हि ज्ञा ादशे कर्मक्षये ति रि तिहेत्वभावाज्ज्ञानप्राप्त्य तरमेव क्षेममश्नुवीत। तत्र शरीरपातप्रतीक्षां नाचक्षीत। ननु वस्तुबलेनैव अयमकर्त्रात्मावबोधः कर्माणि क्षपयन्कथं कानिचित्क्षपयेत्कानिचिच्चोपेक्षेत? नहि समानेऽग्निबीज पर्के केषांचिद्बी क्तिः क्षीयते केषां-

च्चि क्षीयते इति शक्यमंगीकर्तुमिति । उच्यते— तावदनाश्रित्यारब्ध-कार्यं कर्माशयं ज्ञानोत्पत्तिरुपपद्यते । आश्रिते च स्मिन्कुलालचक्र त्प्रवृत्त-वेगस्य अंतराले प्रति धा भवाद्भवति वेगक्षयप्रतिपाल म् । अकर्त्रात्मबो-धोऽपि हि मिथ ज्ञानबाधनेन कर्माण्युच्छि त्ति । बाधितमपि मिथ्या-ज्ञानं द्विचंद्रज्ञा वत्संस्कारवशात्किंचित्कालमनुवर्तत एव । अपिच नैवात्र विवादितव्यं ब्रह्मविदा कंचित्का शरीरं ध्रियते न वा ध्रियत इति । कथं ेकस्य स्वहृदयप्रत्ययं ब्रह्मवेदनं देहधारणं चापरेण प्रतिक्षेप्तुं क्येत? श्रुति-स्मृतिषु च स्थितप्रज्ञलक्षणनिर्देशेन एतदेव निरुच्यते । तस्मादनारब्धकार्य-योरेव सुकृतदुष्कृतयोर्विद्या ामर्थ्यात्क्षय इति निर्णयः ॥१५॥

२ अग्निहोत्राद्यधिकरणम् । सू० १६–१ ।

अग्निहोत्रादि त्कार्यायैव तद्दर्शनात् ॥१६॥

पुण्यस्याप्यश्लेषविनाशयोरघन्यायोऽतिदिष्टः । सोऽतिदे : सर्वपुण्य-विषय इत्याशंक्य प्रतिवक्ति— अग्निहोत्रादि त्विति । तुशब्द आशंकामप-नुदति । यन्नित्यं कर्म वैदिकमग्नि ोत्रादि, तत्तत्कार्यायैव भवति । ज्ञानस्य यत्कार्यं देवास्यापि कार्यमित्यर्थः । कुतः? ‘ मेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन’ इत्यादिदर्शनात् । ननु ज्ञानकर्मणोर्विलक्षणका-र्यत्वात्कार्यैकत्वानुपपत्तिः । नैष दोषः । ज्वरमरणकार्ययोरपि दधिविषयोः गुडमंत्रसंयुक्तयोः तृप्तिपुष्टिकार्यदर्शनात् । तद्वत्कर्मणोऽपि ज्ञानसंयुक्तस्य मोक्षकार्योपपत्तेः । नन्वनारभ्यो मोक्षः, कथमस्य कर्मकार्यत्वमुच्यते? नैष दोषः । आरादुपकारकत्वात्कर्मणः । ज्ञानस्यैव हि प्रापकं सत्कर्म प्रणाड्या मोक्षकारणमित्युपचर्यते । अतएव च अतिक्रान्तविषयमेतत्कार्यैकत्वाभिधा-नम् । नहि ब्रह्मविद आगाम्यग्निहोत्रादि भवति। अनियोज्यब्रह्मात्मत्वप्रति-पत्तेः ास्त्रस्याविषयत्वात् । सगुणासु तु विद्यासु कर्तृत्वानतिवृत्तेः भव-त्या ाम्यप्यग्निहोत्रादि । स्यापि निरभिसंधिनः कार्यान्तराभावाद्विद्या ग-त्युपपत्तिः ॥१६॥

किंविषयं पुनरिदं अश्लेषाविनाशवचनं, किंविषयं वाऽदो विनियोग-वचनमेकेषां ाखिना ‘तस्य पुत्रा दाय न्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्’ इति अत उत्तरं पठति—

अ ऽन्यापि ॒ ॒ ।मुभयोः ॥१ ॥

अतोऽग्निहोत्रादेर्नित्यात्कर्मणोऽन्यापि ॒ साधुकृत्या, या फलमभिसंध क्रियते, तस्या एष विनियोग उक्तः एकेषां शाखि ाम् 'सुहृदः साधुकृत्यामुपयन्ति' इति । तस्या एव चेदं अघवदश्लेषविनाशनिरूपणं इतरस्याप्येवमश्लेष इति । त । ।तीयकस्य ाम्यस्य कर्मणो विद्यां प्रत्यनुपकारकत्वे संप्रतिपत्तिरुभयोरपि जैमिनिबादरायणयोराचार्ययोः ॥१ ॥

३ विद्याज्ञानसाधनाधिकरणम् । ॰ १८ ।

दे॒व विद्ययेति हि ॥ ८॥

समधिगतमेतदनंतराधिकरणे नित्यमग्निहोत्रादिकं र्म मुमुक्षुणा मोक्षप्रयोजनोद्देशेन कृतमुपात्तदुरितक्षयहेतुत्वद्वारेण त्त्वशुद्धिकारणतां प्रतिपद्यमानं मोक्षप्रयोजनब्रह्माधिगमनिमित्तत्वेन ब्रह्मविद्यया हैककार्यं भवतीति । तत्राग्निहोत्रादि कर्मांगव्यपाश्रयविद्यासंयुक्तं केवलं चास्ति । 'य एवं विद्वान्यजति' 'य एवं विद्वाञ्जुहोति' 'य एवं विद्वाञ्शंसति' य एवं विद्वान्गायति' ' स्मादेवंविदमेव ब्रह्माणं कुर्वीत नानेवंविदं' 'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद' इत्यादि चनेभ्यो विद्यासंयुक्तमस्ति केवलमप्यस्ति । तत्रेदं विचार्यते— किं विद्यासंयुक्तमेव अग्निहोत्रादिकं कर्म मुमुक्षोर्विद्याहेतुत्वेन तया सहैककार्यत्वं प्रतिपद्यते न केवलं, विद्या युक्तं केवलं चाविशेषेणेति । कुतः संशयः? 'तमेतमात्मानं यज्ञेन विविदिषन्ति' इति यज्ञादीनामविशेषे आत्मवेदनांगत्वेन श्रवणात् । विद्यासंयुक्तस्य चाग्निहोत्रादेर्विशिष्टत्वावगमात् । किं तावत्प्राप्तं? विद्यासंयुक्तमेव कर्माग्निहोत्रादि आत्मविद्याशेषत्वं प्रतिपद्यते न विद्याहीनम् । विद्योपेतस्य विशि त्वावगमाद्विद्याविहीनात् । 'यदहरेव जुहोति तदहः पुनर्मृत्युमपजयत्येवंविद्वान्' इत्यादिश्रुतिभ्यः । "बुद्ध्या युक्तो यया पार्थ कर्मबंधं प्रहास्यसि" "दूरेण ह्यवरं कर्म बुद्धियोगाद्धनंजय" इत्यादिस्मृतिभ्यश्चेति । एवं प्राप्ते प्रतिपद्यते— यदेव विद्ययेति हि । सत्यमेतत् । विद्यासंयुक्तं कर्माग्निहोत्रादिकं विद्याविहीनात्कर्मणोऽग्निहोत्राद्विशिष्टं विद्वानिव ब्राह्मणो विद्याविहीनाद्ब्राह्मणात् । तथापि नात्यंतमनपेक्षं विद्याविहीनं कर्माग्निहोत्रादिकम् । कस्मात्? 'तमेतमात्मानं यज्ञेन विविदिषन्ति' इत्यविशेषेणाग्निहोत्रादेः विद्याहेतुत्वेन श्रुत-

त्वात्। ननु विद्यासंयुक्तस्य अग्निहोत्रादेः विद्याविहीनाद्विशिष्टत्वावगमाद्वि-द्याविहीनमग्निहोत्रादि आत्मविद्याहेतुत्वेनानपेक्षमेवेति युक्तम्। नैतदेवम्। विद्यासहायस्याग्निहोत्रादेः विद्यानिमित्तेन सामर्थ्यातिशयेन योगादात्मज्ञानं प्रति कश्चित्कारणत्वातिशयो भविष्यति, न तथा विद्याविहीनस्य, इति युक्तं कल्पयितुम्। ननु 'यज्ञेन विविदिषन्ति' इत्यत्राविशेषेणात्मज्ञानांगत्वेन श्रुतस्याग्निहोत्रादेरनंगत्वं शक्यमभ्युपगंतुम्। तथाहि श्रुतिः 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इति विद्यासंयुक्तस्य कर्मणोऽग्निहोत्रादेः वीर्यवत्तरत्वाभिधानेन स्वकार्यं प्रति कंचिदतिशयं ब्रुवाणा विद्याविहीनस्य तस्यैव तत्प्रयोजनं प्रति वीर्यवत्त्वं दर्शयति। कर्मणश्च वीर्यवत्त्वं यद्यत्स्वप्रयोजनसाधनसहत्वम्। तस्माद्विद्यासंयुक्तं नित्यमग्निहोत्रादि विद्याविहीनं चोभयमपि मुमुक्षुणा मोक्षप्रयोजनोद्देशेनेह जन्मनि जन्मान्तरे च प्राग्ज्ञानोत्पत्तेः कृतं यत्तद्यथासामर्थ्यं ब्रह्माधिगमप्रतिबंधकारणोपात्तदुरितक्षयहेतुत्वद्वारेण ब्रह्माधिगमकारणत्वं प्रतिपद्यमानं श्रवणमननश्रद्धातात्पर्याद्यन्तरंगकारणापेक्षं ब्रह्मविद्यया सहैककार्यं भवतीति स्थितम्॥१८॥

**१४ इतरक्षपणाधिकरणम्। सू० १९।**

**भोगेन त्वितरे क्षपयित्वा संपद्यते॥१९॥**

अनारब्धकार्ययोः पुण्यपापयोर्विद्यासामर्थ्यात्क्षयः उक्तः। इतरे तु आरब्धकार्ये पुण्यपापे उपभोगेन क्षपयित्वा ब्रह्म संपद्यते 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' इति 'ब्रह्मैव सन्ब्रह्माप्येति' इति चैवमादिश्रुतिभ्यः। ननु सत्यपि सम्यग्दर्शने यथा प्राग्देहपाताद्भेददर्शनं द्विचंद्रदर्शनन्यायेनानुवृत्तं, एवं पश्चादप्यनुवर्तेत। न। निमित्ताभावात्। उपभोगशेषक्षपणं हि तत्रानुवृत्तिनिमित्तं नच तादृशमत्र किंचिदस्ति। नन्वपरः कर्माशयोऽभिनवमुपभोगमारप्स्यते। न। तस्य दग्धबीजत्वात्। मिथ्याज्ञानावष्टंभं हि कर्मान्तरं देहपात उपभोगान्तरमारभेत तच्च मिथ्याज्ञानं सम्यग्ज्ञानेन दग्धमित्यतः साध्वेतदारब्धकार्यक्षये विदुषः कैवल्यमवश्यं भवतीति॥१९॥

इति श्रीगोविंदभगवत्पूज्यपादशिष्यस्य श्रीशंकरभगवतः कृतौ शारीरकमीमांसाभाष्ये चतुर्थाध्यायस्य प्रथमः पादः॥

# चतुर्थाध्याये द्वितीयः ादः ।



## १ वागधिकरणम् । ० –२ ।

### वाङ्मनसि दर्शनाच्छब्दाच्च ॥१॥

अथा रासु विद्या फलप्राप्तये देवयानं पंथानमवतारयिष्यन्प्रथमं तावत् यथाशास्त्रमुत्क्रान्ति क्रममन्वाचष्टे । समाना हि विद्वदविदुषोः उत्क्रान्तिरिति वक्ष्यति । अस्ति प्रायणविषया श्रुतिः 'अस्य ोम्य पुरुषस्य प्रयतो वाङ्मनसि ंपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्' इति। किमिह वाच एव वृत्तिमत्त्या मनसि ंपत्तिरुच्यते उत वाग्वृत्तेरिति विशयः। तत्र वागेव तावन्मनसि ंपद्यत इति प्राप्तम् । थाहि श्रुतिरनुगृही । भवति। इतरथा क्षणा स्यात् । श्रुति क्षणाविशये श्रुतिर्न्याय्या न लक्षणा । तस्माद्वाच एवायं मनसि प्रलय इति । एवं प्राप्ते ब्रूमः— वाग्वृत्तिर्मनसि संपद्यत इति । कथं वाग्वृत्तिरिति व्याख्यायते यावता वाङ्मनसीत्येवाचार्यः पठति ? सत्यमेतत् । पठिष्यति तु परस्तात् 'अविभा ो वचनात्' [४.२.१६] इति । तस्मादत्र वृत्त्युपशममात्रं विवक्षितमिति गम्यते । तत्त्वप्रलय विक्षायां तु स ैवाविभागसाम्यात्किं परत्रैव विशिंष्यादविभा इति। तस्मादत्र वृत्त्युपसंहारविवक्षा । वाग्वृत्तिः पूर्वमुपसंह्रियते मनोवृत्ताववस्थितायामित्यर्थः । कस्मात् ? दर्शनात् । दृश्यते हि वाग्वृत्तेः पूर्वो ंहारो मनोवृत्तौ विद्यमानायाम् । नतु वाच एव वृत्तिमत्त्या मनस्युपसंहारः केनचिदपि द्रष्टुं शक्यते । ननु श्रुतिसामर्थ्याद्वाच ए ायं मनस्यप्ययो युक्त इत्युक्तम् । नेत्याह । अतत्प्रकृतित्वात् । यस्य हि य उत्पत्तिस्तस्य त्र लयो न्याय्यो मृदीव शरावस्य । नच मनसो वागुत्पद्यत इति किंचन प्रमाणमस्ति । वृत्त्युद्भवाभिभवौ त्वप्रकृतिसमाश्रयावपि दृश्येते । पार्थिवेभ्यो हीधनेभ्यस्तैजसस्याग्नेर्वृत्तिरुद्भवत्यप्सु चोपशाम्यति । कथं तर्ह्यस्मिन्पक्षे शब्दो वाङ्मन ंपद्यत इति ? अत आह शब्दाच्चेति । शब्दोऽप्यस्मिन्पक्षेऽवकल्पते, वृत्तिवृत्तिमतोरभेदोपचारादित्य ः ॥१॥

### अतएव च ण्यनु ॥२॥

' स्मादुप न्ततेजाः । पुनर्भवमिंद्रियैर्मनसि ंपद्यमानैः' इत्यत्रावि-

शेषेण सर्वेषामेवेंद्रियाणां मनसि संपत्तिः श्रूयते । त्राप्यत एव वाच इव चक्षुरादीनामपि वृत्तिके मनस्यवास्थिते वृत्तिलोपदर्शनात्तत्त्वप्रलयासंभवाच्छब्दोपपत्ते वृत्तिद्वारेणैव सर्वाणींद्रियाणि मनोऽनुवर्तन्ते । वेषां करणानां मनस्युप हाराविशेषे सति वाचः पृथग्ग्रहणं वाङ्मनसि पद्य इत्युदाहरणानुरोधेन ॥२॥

२ मनोधिकरणम् । सू० ३ ।

तन्म : प्राण उत्तरात् ॥३॥

मधिगतमेतत् 'वाङ्मनसि संपद्यते' इत्यत्र वृत्तिसंपात्तिविवक्षेति ॥ अ यदुत्तरवाक्यम् 'मनः प्राणे' इति, किमत्रापि वृत्ति पात्तिरेव विवक्ष्यत उत वृत्तिमत्संपत्तिरिति विचिकित्सायां वृत्तिमत्संपत्तिरेवात्रेति प्राप्तम्। श्रुत्यनुग्रहात् । तत्प्रकृतिकत्वोपपत्तेश्च । तथाहि— 'अन्नमयं हि सोम्य मन आपोमयः प्राणः' इत्यन्नयोनि मन आ नन्त्यब्योनिं च प्राणम् । 'आपश्चान्नमसृजन्त' इ श्रुतिः । अतश्च यन्म : प्राणे प्रलीयतेऽन्नमेव तदप्सु प्रलीयते । अन्नं हि मन आप प्राणः प्रकृतिविकाराभेदादिति । ए प्राप्ते ब्रूमः— तदप्यागृहीतबाह्येंद्रियवृत्ति मनो वृत्तिद्वारेणैव प्राणे प्र ीयते इत्युत्तराद्वाक्यादवगंतव्यम् । तथाहि सुषु ोर्मुमूर्षोश्च प्राणवृत्तौ परिस्पंदात्मिकायामवस्थितायां मनोवृत्तीनामुपशमो दृश्यते । नच मनसः स्वरूपाप्ययः प्राणे संभर्वात । अतत्प्रकृतित्वात् । ननु दर्शितं मन : प्राणप्रकृतित्वम् । नैतत्सारम् । नहीदृशेन प्राणादिकेन तत्प्रकृतित्वेन नः प्राणे संपत्तुमर्हं । एवमपि ह्यन्ने मनः पद्येताप्सु चान्नमप्स्वेव च प्राणः । नह्येतस्मिन्नपि पक्षे प्राणभावपरिणताभ्योऽद्भ्यो मनो जायत इति किंचन प्रमाण स्ति। तस्मान्न मनसः प्राणे स्वरूपाप्ययः । वृत्त्यप्ययेऽपि तु शब्दोऽवकल्पते, वृत्तिवृत्तिमतोरभेदोपचारादिति दर्शितम् ॥३॥

३ अध्यक्षाधिकरणम् । ० ४–६ ।

सोऽध्यक्षे तदु ादिभ्यः ॥४॥

स्थितमेतद्यस्य यतो नोत्पत्तिर स्य तास्मिन्वृत्तिप्रलयो न स्वरूपप्रलय इति । इदमिदानीं 'प्राणस्तेजसि' इत्यत्र चिंत्यते— किं यथाश्रुति प्राणस्य तेजस्येव वृत्त्युप हारः, किंवा देहेंद्रियपं राध्यक्षे जीव इति । तत्र श्रुतेरन-

तिशंक्यत्वात्प्राणस्य तेजस्येव ंपत्तिः स्यादश्रुतकल्प ाया अन्याय्यत्वादि । एवं प्राप्ते प्रतिपद्यते— ोऽध्यक्ष इति । प्रकृतः प्राणोऽध्यक्षेऽविद्याकर्मपूर्वप्रज्ञोपाधिके विज्ञानात्मन्यवतिष्ठते । तत्प्रधाना प्राणवृत्तिर्भवतीत्यर्थः । कुतः ? तदुपगमादिभ्यः । 'एवमेवेममात्मानमं काले वै प्राणा अभिसमायन्ति यत्रैतदूर्ध्वोच्छ्वासी भवति' इति हि श्रुत्यंतरमध्यक्षोपगामिनः सर्वान्प्राणानाविशेषेण दर्शयति । विशेषेण च 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' इति पंचवृत्तेः प्राणस्याध्यक्षानुगामितां दर्शयति, तदनुवृत्तितां चेतरेषां "प्राणमनूत्क्रामन्तं सर्वे प्रा ा अनूत्क्रामन्ति' इति । 'सविज्ञानो भवति' इति चाध्यक्षस्य अंतर्विज्ञानवत्त्वप्रदर्शनेन तास्मिन्नपीतकरणग्रामस्य प्राणस्यावस्थानं गमयति । ननु 'प्राणस्तेजसि' इति श्रूयते । कथं प्राणोऽध्यक्षे इत्यधिकावापः क्रियते ? नैष दोषः । अध्यक्षप्रधानत्वादुत्क्रमणादिव्यवहारस्य, श्रुत्यंरगतस्यापि च विशेषस्यापेक्षणीयत्वात् ॥४॥

कथं तर्हि 'प्राणस्तेजसि' इति श्रुतिरित्यत आह—

## भूतेषु तच्छ्रुतेः ॥५॥

स प्राणसंपृक्तोऽध्यक्षः तेजःसहचरितेषु भूतेषु देहबीजभूतेषु सूक्ष्मेष्ववतिष्ठत इत्यवगंतव्यम् । प्राणस्तेजसीति श्रुतेः । ननु चेयं श्रुतिः प्राणस्य तेजसि स्थितिं दर्शयति, न प्राणसंपृक्तस्याध्यक्षस्य । नैष दोषः । सोऽध्यक्षे इत्यध्यक्षस्याप्यंतरालेऽप्युपसंख्यातत्वात् । योऽपि हि स्रुघ्नान्मथुरां गत्वा मथुरायाः पाटलिपुत्रं व्रजति, सोऽपि स्रुघ्नात्पाटलिपुत्रं यातीति शक्यते वदितुम् । तस्मात्प्राणस्तेजसीति प्राणसंपृक्तस्याध्यक्षस्यैव एतत्तेजःसहचरितेषु भूतेष्ववस्थानम् ॥५॥

क ं ते ःसहचरितेषु भूतेष्वित्युच्यते, यावतैकमेव तेजः श्रूयते 'प्राणस्तेजसि' इति । अत आह—

## नैकस्मिन्दर्शयतो हि ॥६॥

नैकस्मिन्नेव तेजसि शरीरान्तरप्रेप्सावेलायां जीवोऽवतिष्ठते, कार्यस्य शरीरस्यानेकात्मकत्वदर्शनात् । दर्शयतश्चैतमर्थं प्रश्नप्रतिवचने 'आपः पुरुषवचसः' इति । तद्व्याख्यातम् 'त्र्यात्मकत्वात्तु भूयस्त्वात्' [ .१.२] इत्यत्र । श्रुतिस्मृती चैतमर्थं दर्शयतः । श्रुतिः 'पृथ्वीमय आपोमयो वायु-

य आकाशमयस्तेजोमयः' इत्याद्या । स्मृतिरपि "अण्व्यो मात्राऽविनाशिन्यो दशार्धानां तु याः स्मृताः । ताभिः सर्वमिदं सर्वं संभवत्यनुपूर्वशः" इत्याद्या । ननु चोपसंहृतेषु वागादिषु करणेषु शरीरान्तरप्रेप्सावेलायां 'क्वायं तदा पुरुषो भवति' इत्युपक्रम्य श्रुत्यंतरं कर्माश्रयतां निरूपयति— 'तौ ह यदूचतुः कर्म हैव तदूचतुरथ ह यत्प्रशशंसतुः कर्म हैव तत्प्रशशंसतुः' इति । अत्रोच्यते— तत्र कर्मप्रयुक्तस्य ग्रहातिग्रहसंज्ञकस्येंद्रियविषयात्मकस्य बंधनस्य प्रवृत्तिरिति कर्माश्रयतोक्ता । इह पुनर्भूतोपादानाद्देहान्तरोत्पत्तिरिति भूताश्रयत्वमुक्तम् । प्रशंसाशब्दादपि तत्र प्राधान्यमात्रं कर्मणः प्रदर्शितं नत्वाश्रयान्तरं निवारितम् । तस्मादविरोधः ॥६॥

४ आसृत्युपक्रमाधिकरणम् । सू० ७ ।

समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥७॥

सेयमुत्क्रान्तिः किं विद्वदविदुषोः समाना किंवा विशेषवतीति विशयानानां विशेषवतीति तावत्प्राप्तम् । भूताश्रयविशिष्टा ह्येषा । पुनर्भवाय च भूतान्याश्रीयन्ते । नच विदुषः पुनर्भवः संभवति । 'अमृतत्वं हि विद्वानश्नुते' इति स्थितिः । तस्मादविदुष एवैषोत्क्रान्तिः । ननु विद्याप्रकरणे समाम्नानाद्विदुष एवैषा भवेत् । न । स्वापादिवद्यथाप्राप्तानुकीर्तनात् । यथाहि 'यत्रैतत्पुरुषः स्वपिति नाम' 'अशिशिषति नाम' 'पिपासति नाम' इति च सर्वप्राणिसाधारणा एव स्वापादयोऽनुकीर्त्यन्ते, विद्याप्रकरणेऽपि प्रतिपिपादयिषितवस्तुप्रतिपादनानुगुण्येन, नतु विदुषो विशेषवन्तो विधित्स्यन्ते । एवं इयमप्युत्क्रान्तिः महाजनगतैवानुकीर्त्यते यस्यां परस्यां देवतायां पुरुषस्य प्रयतस्तेजः संपद्यते स आत्मा तत्त्वम सीत्येतत्प्रतिपादयितुम् । प्रतिषिद्धा चैषा विदुषः 'न तस्य प्राणा उत्क्रामन्ति' इति । तस्मादविदुष एवैषेति । एवं प्राप्ते ब्रूमः— समाना चैषोत्क्रान्तिर्वाङ्मनसीत्याद्या विद्वदविदुषोरासृत्युपक्रमाद्भवितुमर्हति । अविशेषश्रवणात् । अविद्वान्देहबीजभूतानि भूतसूक्ष्माण्याश्रित्य कर्मप्रयुक्तो देहग्रहणमनुभवितुं संसरति । विद्वांस्तु ज्ञानप्रकाशितं मोक्षनाडीद्वारमाश्रयते । तदेतदासृत्युपक्रमादित्युक्तम् । नन्वमृतत्वं हि विदुषा प्राप्तव्यं नच देशान्तरायत्तं तत्र कुतो भूताश्रयत्वं सृत्युपक्रमो वेति । अत्रोच्यते— अनुपोष्य चेदम्, अदग्ध्वाऽत्यंत विद्यादीन्क्लेशानपरविद्या-

सामर्थ्यादापेक्षिकममृतत्वं प्रेप्सते भवति तत्र मृत्युपक्रमो भूताश्रयत्वं च। नहि निराश्रयाणां प्राणानां गतिरुपपद्यते। तस्माददोषः ॥७॥

### ५ संसारव्यपदेशाधिकरणम्। सू० ८–११।

**तदाऽपीतेः संसारव्यपदेशात् ॥८॥**

'तेजः परस्यां देवतायाम्' इत्यत्र प्रकरणसामर्थ्यात्तद्यथा प्रकृतं तेजः साध्यक्षं सप्राणं करणग्रामं भूतान्तरसहितं प्रयतः पुंसः परस्यां देवतायां संपद्यत इत्येतदुक्तं भवति। कीदृशी पुनरियं संपत्तिः स्यादिति चिंत्यते। तत्रात्यंतिक एव तावत्स्वरूपप्रविलय इति प्राप्तम्। तत्प्रकृतित्वोपपत्तेः। सर्वस्य हि जनिमतो वस्तुजातस्य प्रकृतिः परा देवतेति प्रतिष्ठापितम्। तस्मादात्यंतिकीयमविभागापत्तिरिति। एवं प्राप्ते ब्रूमः— तत्तेज आदि भूतसूक्ष्मं श्रोत्रादिकरणाश्रयभूतं आऽपीतेरा संसारमोक्षात् सम्यग्ज्ञाननिमित्तादवतिष्ठते। 'योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः। स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्' इत्यादिसंसारव्यपदेशात्। अन्यथा हि सर्वः प्रायणसमय एवोपाधिप्रत्यस्तमयादत्यंतं ब्रह्म संपद्येत। तत्र विधिशास्त्रमनर्थकं स्याद्विद्याशास्त्रं च। मिथ्याज्ञाननिमित्तश्च बंधो न सम्यग्ज्ञानादृते विस्रंसितुमर्हति। तस्मात्तत्प्रकृतित्वेऽपि सुषुप्तप्रलयवद्बीजभावावशेषैवैषा सत्संपत्तिरिति ॥८॥

**सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥९॥**

तच्चेतरभूतसहितं तेजो जीवस्यास्माच्छरीरात्प्रवसत आश्रयभूतं स्वरूपतः परिमाणतश्च सूक्ष्मं भवितुमर्हति। तथाहि नाडीनिष्क्रमणश्रवणादिभ्योऽस्य सौक्ष्म्यमुपलभ्यते। तत्र तनुत्वात्संचारोपपत्तिः। स्वच्छत्वाच्च अप्रतिघातोपपत्तिः। अतएव च देहान्निर्गच्छन्पार्श्वस्थैर्नोपलभ्यते ॥९॥

**नोपमर्देनातः ॥१०॥**

अतएव सूक्ष्मत्वान्नास्य स्थूलस्य शरीरस्योपमर्देन दाहादिनिमित्तेनेतरत्सूक्ष्मं शरीरमुपमृद्यते ॥१०॥

**अस्यैव चोपपत्तेरेष ऊष्मा ॥११॥**

अस्यैव च सूक्ष्मस्य शरीरस्यैष ऊष्मा यमेतस्मिञ्शरीरे संस्पर्शेनोष्माणं विजानन्ति। तथाहि मृतावस्थायामवस्थितेऽपि देहे विद्यमानेष्वपि च

रूपादिषु देहगुणेषु नोष्मोपलभ्यते जीवदवस्थायामेव तूपलभ्यते, इत्यत उपपद्यते प्रसिद्धशरीरव्यतिरिक्तव्यपाश्रय एवैष ऊष्मेति। तथाच श्रुतिः— "उष्ण एव जीविष्यञ्शीतो मरिष्यन्" इति ॥११॥

६ प्रतिषेधाधिकरणम्। सू० १२–१४।

प्रतिषेधादिति चेन्न शारीरात् ॥१२॥

'अमृतत्वं चानुपोष्य' इत्यतो विशेषणादात्यंतिकेऽमृतत्वे गत्युत्क्रान्त्योरभावोऽभ्युपगतः। तत्रापि केनचित्कारणेनोत्क्रान्तिमाशंक्य प्रतिषेधति— 'अथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो भवति न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन्ब्रह्माप्येति' इति। अतः परविद्याविषयात्प्रतिषेधान्न परब्रह्मविदो देहात्प्राणानामुत्क्रान्तिरस्तीति चेत्। नेत्युच्यते। यतः शारीरादात्मन एष उत्क्रान्तिप्रतिषेधः प्राणानां, न शरीरात्। कथमवगम्यते? 'न तस्मात्प्राणा उत्क्रामन्ति' इति शाखान्तरे पंचमीप्रयोगात्। संबंधसामान्यविषया हि षष्ठी शाखान्तरगतया पंचम्या संबंधविशेषे व्यवस्थाप्यते। तस्मादिति च प्राधान्यादभ्युदयनिःश्रेयसाधिकृतो देही संबध्यते न देहः। न तस्मादुच्चिक्रमिषोर्जीवात्प्राणा अपक्रामन्ति सहैव तेन भवन्तीत्यर्थः ॥१२॥

सप्राणस्य च प्रवसतो भवत्युत्क्रान्तिर्देहादित्येवं प्राप्ते प्रत्युच्यते—

स्पष्टो ह्येकेषाम् ॥१३॥

न तदस्ति यदुक्तं परब्रह्मविदोऽपि देहादस्त्युत्क्रान्तिरुत्क्रान्तिप्रतिषेधस्य देह्यपादानत्वादिति। यतो देहापादान एवोत्क्रान्तिप्रतिषेध एकेषां समाम्नातॄणां स्पष्ट उपलभ्यते। तथाहि— आर्तभागप्रश्ने 'यत्रायं पुरुषो म्रियत उदस्मात्प्राणाः क्रामन्त्याहो नेति' इत्यत्र 'नेति होवाच याज्ञवल्क्यः' इत्यनुत्क्रान्तिपक्षं परिगृह्य, न तर्ह्ययमनुत्क्रान्तेषु प्राणेषु म्रियत इत्यस्यामाशंकायां 'अत्रैव समवनीयन्त' इति प्रविलयं प्राणानां प्रतिज्ञाय तत्सिद्धये 'स उच्छ्वयत्याध्मायत्याध्मातो मृतः शेते' इति स-शब्दपरामृष्टस्य प्रकृतस्योत्क्रान्त्यवधेः उच्छ्वयनादीनि समामनन्ति। देहस्य चैतानि स्युर्न देहिनः। तत्सामान्यात् 'न तस्मात्प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते' इत्यत्राप्यभेदोपचारेण देहापादानस्यैवोत्क्रमणस्य प्रतिषेधः। यद्यपि प्राधान्यं देहिन इति

व्याख्येयं येषां पंचमीपाठः । येषां तु षष्ठीपाठः तेषां विद्वत्संबंधिन्युत्क्रान्तिः प्रतिषिध्यत इति प्राप्तोत्क्रान्तिप्रतिषेधार्थत्वादस्य वाक्यस्य देहापादानैव सा प्रतिषिद्धा भवति, देहादुत्क्रान्तिः प्राप्ता न देहिनः । अपिच 'चक्षुष्टो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इत्येवमविद्वद्विषयं सप्रपंचमुत्क्रमणं सास्गमनं च दर्शयित्वा 'इति नु कामयमानः' इत्युपसंहृत्याविद्वत्कथाम् 'अथाकामयमानः' इति व्यपदिश्य विद्वांसं यदि तद्विषयेऽप्युत्क्रान्तिमेव प्रापयेदसमंजस एव व्यपदेशः स्यात् । तस्मादविद्वद्विषये प्राप्तयोर्गत्युत्क्रान्त्योर्विद्वद्विषये प्रतिषेध इत्येवमेव व्याख्येयं व्यपदेशार्थवत्त्वाय । नच ब्रह्मविदः सर्वगतब्रह्मात्मभूतस्य प्रक्षीणकामकर्मणः उत्क्रान्तिर्गतिर्वोपपद्यते, निमित्ताभावात् । 'अत्र ब्रह्म समश्नुते' इति चैवंजातीयकाः श्रुतयो गत्युत्क्रान्त्योः अभावं सूचयन्ति ॥१३॥

**स्मर्यते च ॥१४॥**

स्मर्यतेऽपि च महाभारते गत्युत्क्रान्त्योरभावः— "सर्वभूतात्मभूतस्य सम्यग्भूतानि पश्यतः । देवा अपि मार्गे मुह्यन्त्यपदस्य पदैषिणः" इति । ननु गतिरपि ब्रह्मविदः सर्वगतब्रह्मात्मभूतस्य स्मर्यते "शुकः किल वैयासकिर्मुमुक्षुरादित्यमंडलमाभिप्रतस्थे पित्रा चानुगम्याहूतो भो इति प्रतिशुश्राव" इति । न । सशरीरस्यैवायं योगबलेन विशिष्टदेशप्राप्तिपूर्वकः शरीरोत्सर्ग इति द्रष्टव्यम् । सर्वभूतदृश्यत्वाद्युपन्यासात् । नह्यशरीरं गच्छन्तं सर्वभूतानि द्रष्टुं शक्नुयुः । तथाच तत्रैवोपसंहृतम्— "शुकस्तु मारुताच्छीघ्रां गतिं कृत्वाऽन्तरिक्षगः । दर्शयित्वा प्रभावं स्वं सर्वभूतगतोऽभवत्" इति । तस्मादभावः परब्रह्मविदो गत्युत्क्रान्त्योः । गतिश्रुतीनां तु विषयमुपरिष्टाद्व्याख्यास्यामः ॥१४॥

**७ वागादिलयाधिकरणम् । सू० १५ ।**

**तानि परे तथाह्याह ॥१५॥**

तानि पुनः प्राणशब्दोदितानींद्रियाणि भूतानि च परब्रह्मविदः तस्मिन्नेव परस्मिन्नात्मनि प्रलीयन्ते । कस्मात्? तथाह्याह श्रुतिः— 'एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति'

इति । ननु 'गताः कलाः पंचदश प्रति :' इति विद्वद्विषयै ापरा श्रुतिः परस्मादात्मनोऽन्यत्रापि लानां यमाह । न । ा खलु व्यवहारापेक्षा, पार्थिवाद्याः कलाः पृथिव्यादीरेव स्वप्रकृतीरपियन्तीति । इतरा तु विद्वत्प्रतिपत्त्यपेक्षा, कृत्स्नं कलाजातं परब्रह्मविदो ब्रह्मैव ंपद्यत इति । तस्माददोषः॥

८ अ िभा धिकरण ् । सू० १६ ।

अविभागो वचना ् ॥१६॥

पुनर्विदुषः कलाप्रलयः किमितरेषामिव सावशेषो भवति, आहोस्विन्निरवशेष इति । तत्र प्रलयसामान्याच्छक्त्यवशेषताप्र क्तौ ब्रवीति— अविभागापत्तिरेवेति । कुतः? वचनात् । तथाहि कलाप्रलयमुक्त्वा वक्ति— 'भिद्येते तासां नामरूपे पुरुष इत्येवं प्रोच्यते स एषोऽकलोऽमृतो भवति' इति । अविद्यानिमित्तानां च कलानां न विद्यानिमित्ते प्रलये सावशेषत्वोपपत्तिः । तस्मादविभाग एवेति ॥१६॥

९ तदोकोऽधिकरणम् । सू० १ ।

तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीताः शताधिकया ॥१ ॥

समाप्ता प्रासंगिकी परविद्यागता चिंता । संप्रति त्वपरविद्याविषयां एव चिंतामनुवर्तयति । समाना चासृत्युपक्रमाद्विद्वदविदुषोः उत्क्रान्तिः इत्युक्तम् । तमिदानीं सृत्युपक्रमं दर्शयति । तस्योपसंहृतवागादिकलापस्य उच्चिक्रमिषतो विज्ञानात्मनः ओक आयतनं हृदयम् 'स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति' इति श्रुतेः । तदग्रप्रज्वलनपूर्विका चक्षुरादिस्थानापादाना चोत्क्रान्तिः श्रूयते— 'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्यः' इति । सा किमनियमेनैव विद्वदविदुषोर्भवति, अथास्ति कश्चिद्विदुषो विशेषनियम इति विचिकित्सायां श्रुत्यविशेषादनियमप्राप्तावाचष्टे— मानेऽपि हि विद्वदविदुषोर्हृदयाग्रप्रद्योतने तत्प्रकाशितद्वारत्वे च मूर्धस्थानादेव विद्वानि ष्क्रामति, स्थानान्तरेभ्यस्त्वितरे । कुतः? विद्या ाम-र्थ्यात् । यदि विद्वानपीतरवत् य ःकु श्चिद्देहदेशादुत्क्रामेत् नैवोत्कृष्टं लोकं मे । अनर्थिकैव विद्या स्यात् । तच्छे गत नुस्मृतियोगाच्च विद्याशे-

षभूवा च मूर्धन्यनाडीसंबद्धा गतिरनुशीलयितव्या विद्याविशेषेषु विहिता। तामभ्यस्यंस्तयैव प्रतिष्ठत इति युक्तम्। स्मात् हृदयालयेन ब्रह्मणा सूपासितेनानुगृहीतस्तद्भावं समापन्नो विद्वान्मूर्धन्ययैव श ाधिकया शतादतिरिक्तया एकशततम्या नाड्या निष्क्रामति, इतराभिरितरे। तथाहि ार्दविद्यां प्रकृत्य मामनन्ति— 'शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका। तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति' इति॥

१ रश्म्यधिकरणम्। सू० १८।

**रश्म्यनुसारी ॥ ८॥**

अस्ति हार्दविद्या— 'अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुंडरी वेश्म' इत्युपक्रम्य विहिता। तत्प्रक्रियायां 'अथ या एता हृदयस्य ना ः' इत्युपक्रम्य प्रपंचं नाडीरश्मिसंबंधमुक्त्वोक्तं 'अथ य तदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते' इति। पुनश्चोक्तम् ' योर्ध्वमायन्नमृतत्वमेति' इति। तस्माच्छताधिकया नाड्या निष्क्रामन्रश्म्यनु ारी निष्क्रामतीति गम्यते। तत्किमविशेषेणैवाहनि रात्रौ वा म्रियमाणस्य रश्म्यनुसारित्वं, आहोस्विदहन्येव, इति संशये सति, अवि षश्रवणादविशेषेणैव तावद्रश्म्यनु ारीति प्रतिज्ञायते ॥१८॥

**निशि नेति चेन्न धस्य वद्देहभावित्वाद्दर्शय च ॥ ९॥**

अस्त्यहनि नाडीरश्मिसंबंध इत्यहनि मृतस्य स्याद्रश्म्यनुसारित्वम्। रात्रौ तु प्रेतस्य न स्यात्। नाडीरश्मि संबंधविच्छेदात्। इति चेन्न। नाडीरश्मिसंबंधस्य यावद्देहभावित्वात्। यावद्देहभावी हि शिराकिरण पर्कः। दर्शयति चैतमर्थं श्रु ः— 'अमुष्मादादित्यात्प्रतायन्ते ता आसु नाडीषु सृता आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृताः' इति। निदाघसमये च निशास्वपि किरणानुवृत्तिरुपलभ्यते, प्रतापादिकार्यदर्शनात्। स्तोकानुवृत्तेस्तु दुर्लक्ष्यत्वं ऋत्वंतररजनीषु शैशिरेष्विव दुर्दिनेषु। 'अहरेवैद्रात्रौ दधाति' इति चैतदेव दर्शयति। यदि च रात्रौ प्रेतो विनै रश्म्यनुसारेणोर्ध्वमाक्रमेत, रश्म्यनुसारानर्थक्यं भवेत्। नह्येताद्विशिष्याधीयते, यो दिवा प्रैति रश्मीनपेक्ष्योर्ध्वमाक्रमते यस्तु रात्रौ सोऽनपेक्ष्यैवेति। अथतु विद्वानपि रात्रिप्रायणापराधमात्रेण नोर्ध्वमाक्रमेत, पाक्षि । विद्येत्यप्रवृ-

त्तिरेव तस्यां स्यात् । मृत्युकालानियमात् । अथापि रात्रावुपरतोऽहरागममुदीक्षेत । अहरागमेऽप्यस्य कदाचिदरश्मिसंबंधार्हं शरीरं स्यात्पावकादिसंपर्कात् । 'स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छति' इति च श्रुतिरनुदीक्षां दर्शयति । तस्मात् अविशेषणैवेदं रात्रिंदिवं रश्म्यनुसारित्वम् ॥१९॥

**११ दक्षिणायनाधिकरणम् । सू० २०–२१ ।**

**अतश्चायनेऽपि दक्षिणे ॥२०॥**

अतएव चोदीक्षानुपपत्तेः अपाक्षिकफलत्वाच्च विद्यायाः, अनियतकालत्वाच्च मृत्योः, दक्षिणायनेऽपि म्रियमाणो विद्वान्प्राप्नोत्येव विद्याफलम् । उत्तरायणमरणप्राशस्त्यप्रसिद्धेः भीष्मस्य च प्रतीक्षादर्शनात् 'आपूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासांस्तान्' इति च श्रुतेः, अपेक्षितव्यमुत्तरायणं, इतीमामाशंकामनेन सूत्रेणापनुदति । प्राशस्त्यप्रसिद्धिरविद्वद्विषया । भीष्मस्य प्रतिपालनमाचारपरिपालनार्थं पितृप्रसादलब्धस्वच्छंदमृत्युताख्यापनार्थं च । श्रुतेस्त्वर्थं वक्ष्यति 'आतिवाहिकास्तल्लिंगात्' [४.३.४] इति ॥२०॥

ननु च— "यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः । प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ" इति कालप्राधान्येनोपक्रम्य अहरादिकालविशेषः स्मृतावपुनरावृत्तये नियमितः । कथं रात्रौ दक्षिणायने वा प्रयातोऽनावृत्तिं यायादिति । अत्रोच्यते—

**योगिनः प्रति च स्मर्यते स्मार्ते चैते ॥२१॥**

योगिनः प्रति चायं अहरादिकालविनियोगोऽनावृत्तये स्मर्यते । स्मार्ते चैते योगसांख्ये, न श्रौते । अतो विषयभेदात्प्रमाणविशेषाच्च नास्य स्मार्तस्य कालविनियोगस्य श्रौतेषु विज्ञानेष्ववतारः । ननु "अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्" । "धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्" इति च श्रौतावेतौ देवयानपितृयाणौ प्रत्यभिज्ञायेते स्मृतावपीति । उच्यते— "तं कालं वक्ष्यामि" इति स्मृतौ कालप्रतिज्ञानाद्विरोधमाशंक्य अयं परिहार उक्तः । यदा पुनः स्मृतावप्यग्न्याद्या देवता एवातिवाहिक्यो गृह्यन्ते, तदा न कश्चिद्विरोध इति ॥२१॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवतः कृतौ शारीरकमीमांसाभाष्ये चतुर्थाध्यायस्य द्वितीयः पादः ॥

# चतुर्थाध्याये तृतीयः पादः



## १ अर्चिराद्याधिकरणम् । सू० ।

अर्चिरादिना तत्प्रथितेः ॥१॥

आसृत्युपक्रमात्समानोत्क्रान्तिरित्युक्तम् । सृतिस्तु श्रुत्यंतरेष्वनेकधा श्रूयते । नाडीरश्मिसंबंधेनैका 'अथैतैरेव रश्मिभिरूर्ध्व आक्रमते' इति । अर्चिरादिकैका 'तेऽर्चिषमभिसंभवन्त्यार्चिषोऽहः' इति । "स एतं देवयानं पंथानमासाद्याग्निलोकमागच्छति" इत्यन्या । 'यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति' इत्यपरा । 'सूर्यद्वारेण ते विरजाः प्रयान्ति' इति चापरा । तत्र संशयः— किं परस्परं भिन्ना एताः सृतयः, किं वैकैव अनेकविशेषणेति । तत्र प्राप्तं तावद्भिन्ना एताः सृतय इति । भिन्नप्रकरणत्वात् । भिन्नोपासनाशेषत्वाच्च । अपिच 'अथैतैरेव रश्मिभिः' इत्यव ारणं अर्चिराद्यपेक्षायामुपरुध्येत । त्वरावचनं च पी ेत ' यावत्क्षिप्येन्मनस्तावदादित्यं गच्छति' इति । तस्मादन्योन्यभिन्ना एवैते पंथान इति । एवं प्राप्तेऽभिदध्महे— अर्चिरादिनेि । सर्वो ब्रह्म प्रेप्सुः अर्चिरादिनैवाध्वना रंहतीति प्रतिजानीमहे । कुतः ? तत्प्रथितेः । प्रथितो ेष मार्गः सर्वेषां विदुषाम् । तथाहि पंचाग्निविद्याप्रकरणे 'ये चामी अरण्ये श्रद्धां सत्यमुपा ते' इति विद्यान्तरशीलिनामप्यार्चिरादिका सृतिः श्राव्यते । स्यादेतत् । यासु विद्यासु न काचिद्गतिरुच्यते तास्वियमर्चिरादिकोपतिष्ठतां, या त्वन्या श्राव्यते तासु किमित्यर्चिराद्याश्रयणमिति । अत्रोच्यते— भवेदेतदेवं यद्यत्यंतभिन्ना एवैताः सृतयः स्युः । एकैव त्वेषा सृतिरनेकविशेषणा ब्रह्मलोकप्रपदनी काचित्केनचिद्विशेषणेनोपलक्षितेति वदामः । वैत्रैकदेशप्रत्यभिज्ञानात् इतरेतरविशेषणविशेष्यभावोपपत्तेः । प्रकरणभेदेऽपि हि विद्यैकत्वे भवतीतरेतरविशेषणोपसंहारवद्गतिविशेषणानामप्युपसंहारः । विद्याभेदेऽपि तु गत्येकदेशप्रत्यभिज्ञानाद्गंतव्याभेदाच्च गत्यभेद एव । तथाहि '' तेषु ब्रह्मलोकेषु पराः परावतो व न्ति' 'तस्मिन्वसन्ति शाश्वतीः समाः' "सा या ब्रह्मणो जितिर्या व्युष्टिस्तां जितिं जयति तां व्युष्टिं व्यश्नुते" 'तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविंदति' इति च तत्र तत्र तदेवैकं फलं ब्रह्मलोकप्राप्ति क्षणं प्रद र्यते ।

यत्त्वेतैरेवेत्यवधारणं अर्चिराद्याश्रयणे न स्यादिति । नैष दोषः । रश्मिप्राप्तिपरत्वादस्य । नह्येक एव ब्दो रश्मींश्च प्रापयितुमर्हति, अर्चिरादीं व्यावर्तयितुम् । माद्रश्मिसंबंध एवायमवधार्यत इति द्रष्टव्यम्। त्वरावचनं त्वर्चिराद्यपेक्षायामपि गंतव्यान्तरापेक्षया शैघ्र्यार्थत्वान्नोपरुध्यते। य । निमिमात्रेणात्रागम्य इति । अपिच 'अथैतयोः पथोर्न कतरेणचन' इति मार्गद्वयभ्रष्टानां कष्टं तृतीयं स्थानमाचक्षाणा पितृयाणव्यतिरिक्तमेकमेव देवयानमर्चिरादिपर्वाणं पंथानं प्रथयति । भूयांस्यर्चिरादिसृतौ मार्गपर्वाण्यल्पीयांसि त्वन्यत्र। भूय । चानुगुण्येनाल्पीयसां नयनं न्याय्यमित्यतोऽप्यर्चिरादिना तत्प्रथितेरित्युक्तम्॥ १॥

२ वाय्वधिकरणम् । सू० २ ।

वायुमब्दादविशेषविशेषाभ्याम् ॥२॥

केन पुनः संनिवेशविशेषेण गतिविशेषणानां इतरेतरविशेषणविशेष्यभाव इति तदेतत्सुहृद्भूत्वाचार्यो ग्रथयति । "स एतं देवयानं पंथानमापद्याग्निलोकमागच्छाति स वायुलोकं स वरुणलोकं इंद्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम्" इति कौषीतकिनां देवयानः पं ाः पठ्यते । तत्रार्चिरग्निलोकशब्दौ तावदेकार्थौ ज्वलनवचनत्वादिति नात्र संनिवेशक्रमः क्विदन्वेष्यः। वायुस्त्वर्चिरादौ वर्त्मनि न श्रुतः कतमस्मिन् स्थाने निवेशयितव्य इति । उच्यते— 'तेऽर्चिषमेवाभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षड्डुदङ्ङेति मासांस्तान् मा भ्यः संवत्सरं संवत्सरादादित्यम्' इत्यत्र संवत रात्परांचमादित्यादर्वाचं वायुमभिसंभवन्ति । कस्मात् ? अविशेषविशेषाभ्याम् । तथाहि— "स वायुलोकम्" इत्यत्राविशेषोपदिष्टस्य वायोः श्रुत्यंतरे विशेषोपदेशो दृश्यते 'यदा वै पुरुषोऽस्माल्लोकात्प्रैति वायुमागच्छाति तस्मै तत्र विजिहीते यथा रथचक्रस्य तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छाति' इति । एतस्मादादित्याद्वायोः पूर्वत्वदर्शनाद्विशेषादब्दादित्ययोरंतराले वायुर्निवेशयितव्यः । कस्मात्पुनरग्नेः परत्वदर्शनाद्विशेषादर्चिषोऽनंतरं वायुर्न निवेश्यते? नैषोऽस्ति विशेष इति वदामः। ननूदाहृता श्रुतिः "स एतं देवयानं पंथानमापद्याग्निलोकमागच्छाति स वायुलोकं स वरुणलोकम्" इ । उच्यते— केवलोऽत्र पाठः पौर्वापर्ये-

णावा ि ो नात्र क्रमवचनः कश्चिच्छब्दोऽस्ति । पदार्थोपद नमात्रं त्र क्रियते एतमेतं चागच्छतीति । इतरत्र पुनर्वायुप्रत्तेन रथचक्रमात्रेण च्छिद्रेणोर्ध्वमाक्रम्य आदित्यमागच्छतीत्यव म्यते क्रमः । तस्मात्सूक्तमविशेषाविशेषाभ्यामिति । वाजसनेयिनस्तु 'मासेभ्यो देवलोकं देवलोकादादित्यम्' इति मामनन्ति । तत्रादित्यानंतर्याय देवलोकाद्वायुमभिसंभवेयुः । वायुमब्दादिति तु छंदोगश्रुत्यपेक्षयोक्तम्। छांदोग्यवा सनेयकयोस्त्वेकत्र देव ोको न विद्यते परत्र संवत्सरः । तत्र श्रुतिद्वयप्रत्ययादुभावप्युभयत्र थयितव्यौ । त्रापि माससंबंधात्संवत्सरः पूर्वः पश्चिमो देवलोक इति विवेक्तव्यम् ॥२॥

३ तडिदधिकरणम् । सू० ३ ।

तडितोऽधि रुणः धात् ॥३॥

'आदित्याच्चंद्रमसं चंद्रमसो विद्युतम्' इत्यस्या विद्युत उपरि त्स वरुणलोकमित्ययं वरुणः संबध्येत। अरि हि बंधो विद्युद्वरुणयोः । यदा हि विशाला विद्युतः तीव्रस्तानितानिर्घोषा जीमूतोदरेषु प्रनृत्यन्त्य ापः प्रपतन्ति। 'विद्योतते स्तनयाति वर्षिष्यति ा' इति च ब्राह्मणम् । अपां चाधिपतिर्वरुण इति श्रुतिस्मृतिप्रसिद्धिः । वरुणादधि इंद्रप्रजापती स्थानान्तराभावात्पाठसामर्थ्याच्च । आगंतुकत्वादपि वरुणादीनामंते एव निवेशो वैशेषिकस्थानाभावात् । विद्युचान्त्या अर्चिरादौ वर्त्मनि ॥३॥

४ आ हिकाधिकरणम् । सू० ४-६ ।

आतिवाहिका ल्लिंगात् ॥४॥

तेष्वेवार्चिरादिषु संशयः— किमेतानि मा चि ान्युत भोगभूमयोऽथवा तारो गंतणामिति। तत्र मार्गलक्षणभूता अर्चिरादय इति तावत्प्राप्तम् । तत्स्वरूपत्वादुपदेशस्य । यथाहि ोके कश्चिद्ग्रामं नगरं वा प्रतिष्ठा - मानोऽनुशिष्यते, गच्छेतस्त्वममुं गिरिं ततो न्यग्रोधं ततो दीं ततो ग्रा ततो न रं वा प्राप्स्यसीति, एवमिहापि 'अर्चिषोऽहर आपूर्यमाणपक्षं' इत्याद्याह । अथवा भोगभूमय इति प्राप्त । तथाहि— ोकशब्देनाग्न्यादीननुबध्नाति "अग्निलोकमागच्छति" इत्यादि । लो ब्दश्च प्राणिनां भोगाय नेषु भाष्यते— 'मनुष्यलोकः पितृ ोको देवलो :' इति च । तथाच म्— "अहोरात्रेषु लोकेषु सजन्ते" इत्यादि । तस्म -

[ ]ाहिका अर्चिरादयः । अचेतनत्वादप्येतेषां आतिवाहिकत्वानुपपत्तिः । चेतना हि लोके राजनियुक्ताः पुरुषा दुर्गेषु मार्गेष्वतिवाह्यानतिवाहयन्तीति। एवं प्राप्ते ब्रूमः— आतिव हिका एवैते भवितुमर्हन्ति । कुतः ? लिंगात् । तथाहि 'चंद्रम गो विद्युतं तत्पुरुषोऽमानवः एतान्ब्रह्म गमयति' इति सिद्धवद्गमयितृत्वं दर्शयति । तद्वचनं तद्विषयमेवोपक्षीणमिति चेत् । न । प्रातमानवत्वनिवृत्तिपरत्वाद्विशेषणस्य । यत्र्यर्चिरादिषु पुरुषा गमयितारः प्राप्तास्ते च मानवाः ततो युक्तं तन्निवृत्त्यर्थं पुरुषविशेषणममानव इति॥४॥

ननु तल्लिंगमात्रमगमकं न्यायाभावात् । नैष दोषः—

उभयव्यामोहात्तत्सि द्धेः ॥५॥

ये तावदर्चिरादिमार्गगाः ते देहवियोगात्संपिंडितकरणग्रामा इत्यस्वतंत्रा अर्चिरादीनामप्यचेतनत्वादस्वातंत्र्यं इत्यतोऽर्चिराद्यभिमानिनश्चेतना देवताविशेषा अतियात्रायां नियुक्ता इति गम्यते । लोकेऽपि हि मत्तमूर्च्छितादयः संपिंडितकरणाः परप्रयुक्तवर्त्मानो भवन्ति । अनवस्थितत्वादप्यर्चिरादीनां न मार्गलक्षणत्वोपपत्तिः । नहि रात्रौ प्रेतस्य अहःस्वरूपाभि भव उपपद्यते । नच प्रतिपालनमस्तीत्युक्तं पुरस्तात् । ध्रुवत्वात्तु देव त्मनां नायं दोषो भवति । अर्चिरादिशब्दता चैषां अर्चिराद्यभिमानादुपपद्यते 'अर्चिषोऽहः' इत्यादिनिर्देशस्तु आतिवाहिकत्वेऽपि न विरुध्यते अर्चिषा हेतुनाऽहरभिसंभवति । अह्ना हेतुना आपूर्यमाणपक्षमिति । तथाच लोके प्रसिद्धेष्वप्यातिवाहिकेषु एवंजातीयक उपदेशो दृश्यते । गच्छ त्वमितो बलवर्माणं तो जयसिंहं ततः कृष्णगुप्तमिति । अपि चोपक्रमे 'तेऽर्चिरभिसंभवन्ति' इति संबंधमात्रमुक्तं, न संबंधविशेषः कश्चित् । उपसंहारे तु 'स एतान्ब्रह्म गमयति' इति संबंधविशेषोऽतिवाह्यातिवाहकत्वलक्षण उक्तः । न स एवोपक्रमेऽपीति निर्धार्यते । संपिंडितकरणत्वादेव च गंतॄणां न तत्रोपभोगसंभवः । लोकशब्दस्त्वनुपभुंजानेष्वपि गंतृषु गमयितुं शक्यते । अन्येषां तल्लोकवासिनां भोगभूमित्वात् । अतोऽग्निस्वामिकं लोकं प्राप्तोऽग्निनाऽतिवा ते, वायुस्वामिकं प्राप्तो वायुनेति योजयितव्यम् ॥५॥

थं पुनरातिवाहिकत्वपक्षे वरुणादिषु तत्संभवः ? विद्युतो धि वरुणादय उपक्षिता विद्युतस्त्वनंतरमा ब्रह्मप्राप्तेः, मानवस्यैव रुषस्य गम-

